G 3 23 26 B 3 17 12 L 3 22 11 जटी तापसरूपेण सभार्यः शरचापधृक् ।
आगतस्त्वमिमं देशं कथं राक्षससेवितम् ॥ ११
एवमुक्तस्तु राक्षस्या शूर्पणख्या परंतपः ।
ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे ॥ १२
आसीद्दशरथो नाम राजा त्रिदशविक्रमः ।
तस्याहमग्रजः पुत्रो रामो नाम जनैः श्रुतः ॥ १३
भ्रातायं लक्ष्मणो नाम यवीयान्मामनुव्रतः ।
इयं भार्या च वैदेही मम सीतेति विश्रुता ॥ १४
नियोगात्तु नरेन्द्रस्य पितुर्मातुश्च यन्त्रितः ।
धर्मार्थं धर्मकाङ्क्षी च वनं वस्तुमिहागतः ॥ १५
त्वां तु वेदितुमिच्छामि कथ्यतां कासि कस्य वा ।
इह वा किंनिमित्तं त्वमागता ब्रूहि तत्त्वतः ॥ १६

---

कामसुखादनिष्कसि (for the prior half) V3 नुपुरे (sic) (for नादुः) —(l 14) V2 अभिगम्य (for साभि°) ]

—d) Ñ2 V1 B D5 7 स स्मित वाक्यमब्रवीत्

11 V2 illeg for 11 (cf v l 1) B4 reads 11–12 in marg —a) Ñ1 Dt1 D6 वेषेण, Cg as in text (for रूपेण) Ñ2 V1 B D5 7 कस्त्वं तापसरूपेण —b) Ś1 Ñ1 B2 Dt1 D1 4 T शरचापभृत् (Ñ1 D5 °इक, Dt1 T °धृत्) Ñ2 M2 स च (M2 सह) चाप°, V1 कवचासि° (for शरचापधृक्) —c) D4 इद (for इम) Ñ2 V1 B D5 7 इम देशमनुप्राप्तो (Ñ2 B1 °प्ता) —d) Ñ2 V1 B D5 7 दुर्गं (for कथं) —After 11, Ñ2 V1 B D5 7 ins

290* नातिदूरमितः शूरा राक्षसा घोरविक्रमाः ।
दरसाद्यन्त्यपीन्सर्वाञ्जनस्थाने महाबलाः ।
वसन्ति क्रूरकर्माणस्ततस्त्वा वै ब्रवीम्यहम् ।
कथं त्वमारमुपयाति सदारस्त्वमिहागतः ।
इदं गोदावरीतीरमुपेत्य पावकोपमा । [5]
त्वद्वाद्बुबल्माश्रित्य तिष्ठन्तीति मतिर्मम ॥

[(l 1) B1 4 दूर इत V1 B2 4 घोररूपिण —(l 3) D7 वसत Ñ2 D5 7 तु (for वै) —(l 4) B3 wrongly repeats इदम —(l 5) V1 इम (for इद) B2 पावकप्रभा ], —while D1 ins

291* राक्षसानामयं वासस्तापसैर्विजनवर्जितः ।

—D1 cont whereas Dg1 Dt1 Dm1 D4 8 S ins after 11

292* किमागमनकृत्यं ते तत्त्वमाख्यातुमर्हसि ।

[Dm1 D1 8 G1 M1 आगमनतार्थं D1 चा° (for आगमनकृत्य) T2 समाख्यातुम् (for त्वमा°) ]

12 V2 illeg for 12 (cf v l 1) —B4 reads 12 in marg (cf v l 11) —a) G3 स (for तु) —b) Ś1 B D1 4 T2 Cg, सू (D1 सु) र्पनख्या Ñ1 Dg1 Dm1 (before corr) सूर्पं° (for शूर्पणख्या) Ś1 Ñ V1 B D1–3 6 8 स (D5 तु) राघव —c) D6 साधर्म (for सर्वम्) —d) Ñ2 व्याख्यातुम् (for माख्या°) —After 12, Dg1 Dm1 D4 8 T G1 3 M ins

293* अनृतं न हि रामस्य कदाचिदपि सम्मतम् ।
विशेषाद्ब्राह्मणस्य समीपे स्त्रीजनस्य च ।

[(l 1) M3 च (for हि) —(l 2) Dg1 D4 T विशेषेण (for विशेषात्) ]

13 V2 illeg for 13 (cf v l 1) —ab) Dt1 wrongly repeats रथो नाम राजा त्रिदश after त्रिदश in a Ñ2 V1 B D5 7 राजा दशरथो नाम धर्मात्मा विश्रुतः क्षितौ —After 13ab B4 ins श्रीराम and श्रीहरि —c) T2 अग्रत (for अग्रज) —d) Ś1 D2 जनश्रुत (for जनैः श्रुतः) Ñ2 V1 B D5 7 राम इत्यभि (B4 [marg also] °र) विश्रुत

14 b) Ś1 Ñ1 D2 3 कनीयानिव (Ñ1 D3 °न्मम) सुव्रत, D1 कनीयान्समनुव्रत —c) Ñ1 D2 M2 च भार्या (by transp) D3 तु भार्या (for भार्या च) —For 14, Ñ2 V1 B D5 7 subst

294* सीतेयं मम भार्या च भ्रातायं लक्ष्मणस्तथा ।

[B4 (marg also) ममैव समनुव्रता (for the post half) ]

15 V2 illeg up to पितु in b —a) Ñ1 illeg, Dg1 D4 G1 च (for तु) —b) D4 मम (for पितुर्) Ś1 Ñ1 D1–3 धर्मेण, Ñ2 V1 B D5 7 शासनात् (for यन्त्रित) —D7 om 15cd —c) Ś1 Ñ V2 B3 4 D1 6 धर्मार्थी, B1 °त्मा, D5 °र्थो, D3 °र्थो (sic) (for धर्मार्थं) Ś1 Ñ1 D2 3 धर्मदर्शी, Ñ2 V B D5 °कामश्च, D1 °रक्षी, M3 °कामी (for धर्मकाङ्क्षी) V2 तु (for च) —d) G(ed) वने (for वन) V1 B2 3 द्रष्टुम् (for वस्तुम्) Ñ2 स्वमागत, D5 समा° (for इहागत) Ś1 Ñ1 D1–3 वनवास समा (Ñ1 D1 3 °समिहा) गत —After 15 Ñ2 V B D5 ins while D7 ins l 2 only after 15ab

295* रूपयौवनसम्पन्ना साक्षाच्छ्रीरिव सुन्दरी ।
वने घोरतरे भीरु का त्वं चरसि दण्डके ।

[(l 1) B1 लक्षण (for यौवन) V1 B4 रूपिणी (for सुन्दरी) V2 श्रीरिव स्तनोवरा (sic) (for the post half) —(l 2) V2 illeg up to चरसि B1 घोरतमे, D7 घोरे (subm) (for घोरतरे) B3 वससि (for चरसि) ]

16 a) Ś1 Ñ1 D1–3 तु विज्ञातुम्, Ñ2 V B D5 7 मद्य ज्ञातुम्, D4 च वे° (for तु वेदितुम्) —b) Ñ2 D5 7 कुतस्त्वं, Dt1 D4 Ct कस्य त्वं (for कथ्यतां) Ñ1 (also) V B1 D5 कस्य कासि (by transp), G1 कासि कस्य Ś1 Ñ1 D2 च (for वा) —After 16ab, Dg1 Dt1 Dm1 D4 8 S ins

सावरीदवचनं श्रुत्वा राक्षसी मदनार्दिता ।
श्रूयतां राम वक्ष्यामि तत्त्वार्थं वचनं मम ॥ १७
अहं शूर्पणखा नाम राक्षसी कामरूपिणी ।
अरण्यं विचरामीदमेका सर्वभयंकरा ॥ १८
रावणो नाम मे भ्राता राक्षसो राक्षसेश्वरः ।
प्रवृद्धनिद्रश्च सदा कुम्भकर्णो महाबलः ॥ १९

विभीषणस्तु धर्मात्मा न तु राक्षसचेष्टितः ।
प्रख्यातवीर्यौ च रणे भ्रातरौ खरदूषणौ ॥ २०
तानहं समतिक्रान्ता राम त्वापूर्वदर्शनात् ।
समुपेतास्मि भावेन भर्तारं पुरुषोत्तमम् ।
चिराय भव भर्ता मे सीतया किं करिष्यसि ॥ २१ G 3 23 40 B 3 17 25 L 3 23 31

296* न हि तावन्मनोज्ञाङ्गी राक्षसी प्रतिभासि मे ।
[ Dt1 D6 8 T3 स ( for न ) M3 तु ( for हि ) G3 मनोज्ञासि M3 मानुषी ( for राक्षसी ) —G3 om ( hapl ) from प्रतिभासि up to राक्षसी in $18^{b}$ D6 G3 प्रतिभाति ( for °भासि ) T2 G1 M1 3 मा ( for मे ) ]

—$^{c}$) Ś1 D2 3 [श्र]ण, Dm1 D6 G3 [पु]र ( for वा ) —$^{d}$) Ñ1 ह्यागता Ś1 Ñ1 D1-3 कारण, M3 कथ्यता (sic) (for तत्त्वतः ) Ñ2 V B D5 7 एका चरसि निर्भया —After 16 M3 ins

297* यक्षिणी राक्षसी वापि मामुताहो सुराङ्गना ।

17 G3 om 17 (cf v l 296*) —$^{a}$) M3 अब्रवीद्, M1 सा तु तद् ( for साब्रवीद् ) Ś1 D1 7 तु वच , Ñ V B D1-3 तद्वच ( for वचन ) —$^{b}$) B1 मदविह्वला, Dg1 °तुरा, D6 °र्दिता ( for मदनार्दिता ) —T1 damaged from वक्ष्यामि in $17^{c}$ up to राक्ष in $18^{b}$ —$^{c}$) Dt1 D6 तत्त्वार्थं ( for वक्ष्यामि ) —$^{d}$) Dt1 D6 वक्ष्यामि ( for तत्त्वार्थं ) Ś1 Ñ V B D1 3 5-7 सह(V1 °ह) भ्राता वचो मम —After 17, M3 ins

298* पुलस्त्यतनयस्याहं सुता राघव तस्य ह ।

18 G3 om up to राक्षसी in $^{b}$ (cf v l 296*) T1 damaged up to राक्ष in $^{b}$ (cf v l 17) —D1 om 18 —$^{a}$) Ś1 Dg1 Dm1 D2 4 8 T2 3 G1 3 M1 3 शू (Dg1 D2 सू)र्पण(Ś1 Dg1 D6 T3 M1 °न)खी, Ñ1 V1 D3 सूर्प° ( for शूर्पणखा ) —$^{c}$) Ñ2 V B M3 अरण्ये, D3 अर° (for अरण्यं) Ś1 Ñ2 V B D3 5 6 7 M2 [ए]का, Ñ1 [ए]षा, Dg1 [ए]व ( for [इ]दम् ) —$^{d}$) D2 घोरसत्त्व, M3 सर्वलोक ( for एका सर्व ) Ś1 Ñ V B D3 6 7 सर्वभूत(Ś1 घोररूप, Ñ1 घोर सत्त्व, D3 घोरा सत्त्व)भयङ्करी( V1 B3 °रा) —After 18 Ñ2 V B D6 7 ins

299* उत्सादयन्ती पुण्यानि तीर्थान्यायतनानि च ।

19 $^{a}$) V1 भ्राता* ( for मे भ्राता ) —$^{b}$) T1 2 बलीयान्, G2 गरीयान् ( for राक्षसो ) Ś1 Ñ1 Dm1 D1-6 8 G3 विश्रुतो (Dm1 D8 G3 राक्षसो) राक्षसाधिप , Dt1 D6 Ch t यदि ते श्रोत्रमागत —After $19^{ab}$, Dm1 D1 6 8 T1 2 G2 3 M2 ins

300* वीरो विश्रवसः पुत्रो यदि ते श्रोत्रमागतः ।
[ Dm1 G2 3 M1 सोव, D8 योध ( for वीरो ) ]

—Ś1 Ñ V B Dg1 Dt1 D1-3 5-7 G1 M1 transp $19^{cd}$ and $20^{ab}$ —$^{c}$) D4 G2 3 M3 Ch प्रवृद्धनिद्रस्, Dm1 D1 G3 तु, T2 स ( for च ) Ñ V B D5 7 T3 तथा ( for सदा ) G1 वृद्धनिद्रश्च सतत —$^{d}$) D1 कुम्भकर्णो T3 सदा ( for महा )

20 Ś1 Ñ V B Dg1 Dt1 D1-3 5-7 G1 M1 transp $19^{cd}$ and $20^{ab}$ —G2 om $20^{ab}$ —$^{a}$) Ś1 Ñ V B D1-6 7 T1 2 M1 3 च ( for तु ) Ñ2 D5 7 मे भ्राता ( for धर्मात्मा ) —$^{b}$) D1 स ( for न ) Ś1 च, Ñ1 D2 3 स ( for तु ) D1 चेष्टित ( for चेष्टितः ) Ñ2 V B D5 7 राक्षसाचारवर्जित, D1 शिष्टराक्षसचेष्टित —$^{c}$) Ñ2 V B D5 7 बलवीर्यौ च, D3 वीर्यौ चारेण (sic) M3 वीर्यामर्षौ ( for °वीर्यौ च रणे ) —$^{d}$) Ñ2 V B D5 7 राक्षसौ ( for भ्रातरौ ) —After 20, Ñ2 V B D5 7 M3 ins

301* महावीर्यौ महाकायौ निर्भयौ घोरदर्शनौ ।
[ B3 महासत्त्वौ ( for °कायौ ) M3 transp महावीर्यौ and महाकायौ B1 राक्षसौ ( for निर्भयौ ) ]

—Ñ2 B3 D5 7 cont

302* चतुर्दश सहस्राणि रक्षसां घोररूपिणाम् ।
बलं भ्रातुर्मम सदा रुरक्ष सुमहात्मन ।
तेन सार्धं महारण्ये वसामि विगतज्वरा ।
भ्राता तेन च गुप्ताहं मन्यमाना मृषा नृप ।
[ (l 1) B1 कामरूपिणा ( for घोर° ) ]

21 $^{a}$) G2 समतिक्रम्य ( for °क्रान्ता ) Ś1 Ñ1 D1 2 त्वा मह त्व( D2 त्व )भिरामा( L[ed ] °म) च( D6 °माच ) —$^{b}$) Ñ1 D1 2 त्व( D1 त्व )त्पूर्वं , T3 G2 M1 Ck त्वा पूर्वं , M2 (after corr sec m as in text) त्व पूर्णं , M3 त्वा पूर्णं (for त्वापूर्व ) Ś1 प्रयाता पूर्वदर्शनात् , D6 राम त्वत्प्रिय काङ्क्षया ⊛ Cr त्वा त्वा पूर्वदर्शनात् प्रथमदर्शनक्षणमारभ्य अपूर्वदर्शनादिति पदम्। Cm त्वा त्वा पूर्वदर्शनात् प्रथमदर्शनादारभ्य। अपूर्वदर्शनादिति वा पाठः।, Cg त्वा त्वा पूर्वदर्शनात् प्रथमदर्शनादारभ्य। अपूर्वदर्शनादिति वा छेदः।, Ck त्वा पूर्वदर्शनात् प्रथमदर्शनक्षणमारभ्य। अपूर्वदर्शनादित्यपि पदम्।, Ct त्वा त्वा पूर्वदर्शनात् प्रथमदर्शनक्षणमारभ्य। यद्वापूर्वदर्शनादित्यादि नत प्रागदृष्टदिव्यरूपदर्शनाद्धेतो ⊛ —Ś1 Ñ1 D1-3 om. $21^{cd}$ —$^{c}$) M3 स्म ( for [अ]स्मि ) —$^{d}$) Dg1 पुरुषर्षभ ( for °षोत्तमम् ). —After $21^{cd}$, Dg1 Dt1 Dm1 D1 6 8 S ins

303* अहं प्रभावसम्पन्ना स्वच्छन्दबलगामिनी ।

G 3 23 41 B 3 17 26 L 3 22 22 विकृता च विरूपा च न सेयं सदृशी तव ।
अहमेवानुरूपा ते भार्यारूपेण पश्य माम् ॥ २२
इमां विरूपामसतीं करालां निर्णतोदरीम् ।
अनेन सह ते भ्रात्रा भक्षयिष्यामि मानुषीम् ॥ २३
ततः पर्वतशृङ्गाणि वनानि विविधानि च ।
पश्यन्सह मया कान्त दण्डकान्विचरिष्यसि ॥ २४
इत्येवमुक्तः काकुत्स्थः प्रहस्य मदिरेक्षणाम् ।
इदं वचनमारेभे वक्तुं वाक्यविशारदः ॥ २५

इति श्रीरामायणे अरण्यकाण्डे षोडशः सर्गः ॥ १६ ॥

---

[D6 वरारोहा M3 °गामिनी (for वरवर्णिनी) ]

—$^{e}$) D3 त्वं राम (for चिराय) Ś1 Dm1 D1 2 8 T2 3 G M2 3 transp भर्ता and मे —$^{f}$) Ś1 Ñ1 D1 3 तयानया (for करिष्यसि) —For 21 Ñ2 V B D5 7 subst while M2 cont after 303*

304* तदहं त्वद्दर्शनाद्राम कामवक्तव्यतां गता ।
भजस्व भजमानां मां सीतया किं तयानया ॥

[(l 1) V1 lacuna B2 काम (for राम) D6 7 वैक्लव्यतां (for वक्तव्यतां) —(l 2) M2 भज मां भजमानां त्वं (for the prior half) and मानुष्या (for सीतया) ]

22 $^{a}$) V1 विरक्ता (for विकृता) Ñ2 V B D5 7 [इ]यं, D4 न (for first च) —T1 damaged from second च up to 22$^{c}$ Ś1 विरूपा विकृता चेयं —$^{b}$) Ś1 हि वा, Ñ1 [इ]यं च, Ñ2 V B Dg1 Dm1 D1 3 7 8 G2 3 M1 2 चे(B4 ते)यं, D2 [इ]यं भवत् D3 [इ]यं हि, M3 [ए]षेयं (for सेयं) —$^{c}$) Ś1 D3 [अ]नुरागाच् (for [अ]नुरूपा) Ś1 B1 D2 3 च, D6 वै (for ते) —$^{d}$) Dm1 G3 जाया, D6 भार्यां (for भार्या) Dm1 पश्य तां, T3 राघव (for पश्य माम्) Ñ2 V B D5 7 M2 भार्या रूपगुणान्विता —After 22, Ñ2 V B D5 7 ins

305* पश्य मां दिव्यरूपां त्वं दिव्याभरणभूषिताम् ।
कान्तोत्पलवनां कान्तां पीनश्रोणिपयोधराम् ॥

[(l 2) B1 पीनोन्नत (for पीनश्रोणि) ]

23 $^{a}$) Ś1 V1 D6 अरूपाम्, Ñ2 कुरूपाम्, M3 करालाम् (for विरूपाम्) —$^{b}$) Dt1 Dm1 D3 T3 करालीं, M2 विरूपां (for करालां) Dg1 Dm1 T2 Ck निर्नतोदरीं G1 निर्मितो°, M2 3 निर्गतो° (for निर्णतोदरीम्) Ś1 Ñ1 V D1-3 5 7 भक्षयिष्यामि मानुषीं(Ś1 मानवीं) (= 23$^{d}$) Ñ1 B द्वितीयेन गतायुषा —$^{c}$) Ñ1 च सह, Ñ2 D5 7 तव किं, B Dm1 D4 T2 M3 ते सह(by transp ) D6 च सह, M1 सह वो (for सह ते) —$^{d}$) M2 मानुषी (for मानुषीम्) Ś1 Ñ1 V D1-3 6 7 द्वितीयेन गतायुषा

24 $^{b}$) Ñ2 V B D5 7 रुचिराणि (for विविधानि) Ś1 Ñ1 D1 3 विविधानि वनानि(D3 च यानि) (by transp ) —$^{c}$) Ś1 D3 G3 काम Ñ1 Dg1 Dt1 D4 6 T2 G1 2 M1 3 कामी (for कान्त) —$^{d}$) V1 B2 4 दण्डक (for दण्डकान्) —After 24 Ñ2 V B D5 7 ins while M2 ins l 2 only after 25$^{ab}$

306* एतत्तु वचनं श्रुत्वा राक्षस्या हृतिदारुणम् ।
ईक्षांचक्रे तदा सीता लक्ष्मणं च महाभुजः ॥

[(l 1) B2 अति (for हृति) —(l 2) B1-3 तत (for तदा) M2 सीतां वीक्ष्य लक्ष्मणं (for the prior half) B1 M2 महाभुज ]

25 $^{a}$) Ś1 Ñ2 D1-3 उक्तस्तु काकुत्स्थ M2 एवमुक्तस्तु काकुत्स्थ —$^{b}$) D1 प्रसह्य (for प्रहस्य) Ś1 Ñ1 D1 2 मदिरेक्षणां, Dm1 T3 G2 3 M1 °क्षण G1 [अ]मितरोषण (for मदिरेक्षणाम्) —For 25$^{ab}$, Ñ2 V B D5 7 subst, Ś1 Ñ1 D1-3 cont after 308* whereas T2 M2 (preceded by 306*) ins after 25$^{ab}$

307* सप्रहासनिमित्तं तु रामं शूर्पणखा तत ।

[Ñ1 स प्रहासं D5(marg also as above) सप्रसादं, T2 सप्रहारं (for सप्रहासं) Ñ1 D1-3 ता (for तु) Ś1 स प्रहासनिमित्ता ता (for the prior half) Ś1 Ñ1 D2 शू(Ñ1 D1 सू)र्पनखा V B1 3 सूर्प°, D2 3 M2 सू(M3 शू)र्पणखी, T3 शूर्पनखी (for शूर्पणखा) Ñ1 पुन, D3 तदा (for तत) ]

—After 25$^{ab}$, Ś1 Ñ1 D1 3 ins

308* देवी सलक्ष्मणा सीता बभूवावस्थिता पुर ।

[D1 3 देवी सलक्ष्मणा सीता (for the prior half) D2 पुरा, D3 पुन (for पुर) ]

—T1 damaged for 25$^{c}$ —$^{c}$) T3 वक्तु G3 इयं (for इदं) —$^{d}$) D4 T1 वाक्य (for वक्तुं) Ś1 Ñ1 D1 3 वक्तुं वचनकोविद, T2 वाक्यज्ञो वाक्यकोविद —After 25 Ś1 D1 3 ins

309* दृष्ट्वा लक्ष्मणमागत्य स्थितामग्रे स राक्षसीम् ।
[D1 3 आभाष्य D2 °सत्य (for गागत्य) ]

Colophon D1 2 om (Sarga cont ) —*Kanda name* Ś1 Dg1 Dt1 Dm1 D6 7 T G M1 2 आरण्यकाण्डे, Ñ1 B2 आरण्यकाण्डे, Ñ2 V B1 D3 8 आरण्यके —*Sarga name* Ś1 Ñ V B D5 7 शू(Ñ1 V B2 सू)र्पण(Ś1 °न)खादर्शनं, D5 सूर्पणखीदर्शनं —*Sarga no* (figures, words or both) Ś1 Ñ1 V2 B1 om Ñ2 B3 D7 23 V1 22 B2 4 24 Dg1 Dt1 Dm1 D4 6 T G M1 17 D3 26 D5 13 M2 3 18 G concludes with श्रीरामाय नमः

१७

तां तु शूर्पणखां रामः कामपाशावपाशिताम् ।
स्वेच्छया श्लक्ष्णया वाचा स्मितपूर्वमथाब्रवीत् ॥ १
कृतदारोऽस्मि भवति भार्येयं दयिता मम ।
त्वद्विधानां तु नारीणां सुदुःखा ससपत्नता ॥ २
अनुजस्त्वेष मे भ्राता शीलवान्प्रियदर्शनः ।
श्रीमानकृतदारश्च लक्ष्मणो नाम वीर्यवान् ॥ ३
अपूर्वी भार्यया चार्थी तरुणः प्रियदर्शनः ।
अनुरूपश्च ते भर्ता रूपस्यास्य भविष्यति ॥ ४
एनं भज विशालाक्षि भर्तारं भ्रातरं मम ।
असपत्ना वरारोहे मेरुमर्कप्रभा यथा ॥ ५
इति रामेण सा प्रोक्ता राक्षसी काममोहिता ।
विसृज्य रामं सहसा ततो लक्ष्मणमब्रवीत् ॥ ६
अस्य रूपस्य ते युक्ता भार्याहं वरवर्णिनी ।
मया सह सुखं सर्वान्दण्डकान्विचरिष्यसि ॥ ७
एवमुक्तस्तु सौमित्री राक्षस्या वाक्यकोविदः ।
ततः शूर्पणखीं स्मित्वा लक्ष्मणो युक्तमब्रवीत् ॥ ८   G 3 24 8 / B 3 18 8 / L 3 23 8

## 17

D1.2 continue the previous Sarga D3 begins with ॐ, M3 with श्रीरामाय नमः

1 [a]) D3 reads तु in marg Ś1 ता च, Dg1 D1.4 T1.2 G3 Cg k तत (for तां तु) Ś1 D4 T3.4 शूर्पनखीं, Ñ1 Dm1 D3.5 सूर्पणखीं, V1 D6 शूर्पनखा Dg1 D1 सूर्पनखा, T1 G1.3 M शूर्पणखीं Ñ2 V B D5.7 दृष्ट्वा, D3 नाम (for राम) —[b]) Ś1 Ñ1 D1.2 M2 कामबाण(M2 °पाश)बलार्दिता, Ñ2 V B D5.7 राम कामबला(B1.3 °शरा)र्दिता G1 कामपाशवशं गता —[c]) Dg1 T1 G1 Cg स्वच्छया, D2 स इद, Cv mp as in text (for स्वेच्छया) Ś1 Ñ V B D2.3.5.7 श्लक्ष्णया युक्त(Ś1 Ñ1 D2.3 स्वच्छ, B3 शुद्ध)या वाचा, M2 हृद्यया व्यक्तया वाचा —[d]) Ñ2 V B D5.7 समाभषत (for मथाब्रवीत्) ※ Ct स्वेच्छया इति पाठे परिहासविनोदेनेत्यर्थः । अत एव स्मितपूर्वमिति नीर्थ । स्वच्छदा इति पाठे युग । स्वेच्छाचारिणीमित्यर्थ ※

2 [a]) T3 कृतकार्या (for °दारो) Ñ1 [ऽ]ह (sic) (for ऽस्मि) D1 भद्रे ते (for भवति) —[c]) Ś1 Ñ1 D1.2 च Dg1 D3 M3 हि (for तु) —[d]) M1.2 सुदुःख (for °खा) Dm1 D3 च सपत्नता G1.3 समपत्निता, G2 सा सपत्नता Ś1 Ñ1 D1-3 सु(Ś1 स्व)तु साय सपत्नता Dg1 T3 सुदु साहा सपत्नता —For 2[cd], Ñ2 V B D5.7 subst

310* त्वद्विधा न च वै नारी सपत्नीं मर्षयेदिमाम् ।

[V2 B1 transp न and च Ñ2 D5.7 वै न च V1 वै न च (by transp) B4 नापि वै G(ed) हि न वै (for न च वै) D5.7 इय](for इमाम्) ]

3 [a]) D1 [ए]व (for [ए]ष) —Ś1 om 3[b]–4[c] —[b]) Ñ1 D1-3 गुणवान् (for शीलवान्) —D3 reads 3[c]–4[b] in marg —[c]) L(ed) चाकृत (for मकृत)

4 Ś1 om 4[abc], D3 reads 4[ab] in marg (for both cf v l 3) Ñ2 V B D5.7 transp [ab] and [cd] —[a]) Ñ2 V B D5.7 तरुणो, Dg1 D4.5 T G1.2 M3 Cmp अपूर्वं, Cr नपूर्वी Cm as in text (for अपूर्वी) V1 B3 हीनो (for चार्थी) Ñ2 D1.3 M2 अपूर्व(M2 °भूत)भार्यो भार्यार्थी —[d]) Ñ2 V B D5.7 रूपवान् (for तरुण) D1 प्रियदर्शने —After 4[ab] Ñ2 V B D2.3 M1 (after 4) ins

311* किं मया ते विरूपेण इतरेण राक्षसि ।

[B2 [अ]भिरूपेण, D2 न कार (subm) (for न वि°) ]

—[c]) Ñ2 V B D5.7 रूपोगुरूपो भत्ता ते ※ Cr अभवति पदच्छेदेनान्तराशय ।, Cm ते भवति च्छेद ।, Cg अनुरूपश्च ते भर्तास्य अभवति छेदेनान्तराशय । Ck अनुरूपश्च ते भत्तायापि अभर्वेति पदच्छेदेनान्तराशय ※ —[d]) D4 T1 G2 च (for [अ]स्य)

5 [a]) Ś1 B2 एन Ñ2 V1 Dg1 Dm1 D2 T3 एव (for एन) Cg विशालाक्षी (for °क्षि) —[b]) Ś1 भ्रातर, D1 लक्ष्मण (for भ्रातर) Ñ1 om (hapl ?) भ्रातर —[c]) Ś1 Ñ1 D3 असपत्न Ñ2 V2 B4 D5.7 °त्नी (for °त्ना) D3 असपत्न विशालाक्षि

6 [a]) Ś1 Ñ1 D1-3 उक्ता (for प्रोक्ता) Ñ2 V B D5.7 इत्युक्ता साथ रामेण —[b]) Ś1 D1-3 M2 मदनार्दिता, Ñ1 मद दर्पिता, Ñ2 V B D5.7 कामरूपिणी (for काममोहिता) —[c]) D3 तस्मा G2 सा घोरा (for सहसा) Dm1 D3 सहसा राम (by transp) —[d]) M3 तस्या (for ततो)

7 M1 om (hapl) 7–8 D4 om 7 —[a]) D3 मे भवा (for ते युक्ता) —For 7[ab], Ñ2 V B D5.7 subst

312* तवानुरूपा रूपस्य भार्या सा भव मानद ।

[V1 [अ]नुरूप (for °पा) V2 मानव ]

—[c]) Ś1 Ñ1 D1.2 सुखी सर्वान्, Ñ2 V B1.4 D5.7 सुखी रम्यान् B2.3 सुखी रम्यां D2 सुखी सार्धं M2 सुख कामी (for सुख सर्वान्) —[d]) B1.2 दण्डकं (for °कान्) M2 प्रचरिष्यसि —After 7 B1 ins

313* वशीभूतश्च मे सर्वे ये चान्ये वनचारिणः ।

8 M1 om 8 (cf v l 7) —[ab]) Ś1 Dg1 राक्षस्या सौमित्रिर् (by transp) —[c]) Dg1 अथ (for ततः) Dg1

G 3 24 9 B 3 18 9 I 3 23 9

कथं दासस्य मे दासी भार्या भवितुमिच्छसि ।
सोऽहमार्येण परवान्भ्रात्रा कमलवर्णिनी ॥ ९
समृद्धार्थस्य सिद्धार्था मुदितामलवर्णिनी ।
आर्यस्य त्वं विशालाक्षि भार्या भव यवीयसी ॥ १०
एतां विरूपामसतीं करालां निर्णतोदरीम् ।
भार्यां वृद्धां परित्यज्य त्वामेवैष भजिष्यति ॥ ११
को हि रूपमिदं श्रेष्ठं संत्यज्य वरवर्णिनि ।
मानुषीषु वरारोहे कुर्याद्भावं विचक्षणः ॥ १२
इति सा लक्ष्मणेनोक्ता कराला निर्णतोदरी ।
मन्यते तद्वचः सत्यं परिहासाविचक्षणा ॥ १३
सा रामं पर्णशालायामुपविष्टं परंतपम् ।
सीतया सह दुर्धर्षमब्रवीत्काममोहिता ॥ १४
इमां विरूपामसतीं करालां निर्णतोदरीम् ।
वृद्धां भार्यामवष्टभ्य न मां त्वं बहु मन्यसे ॥ १५

सूर्पनखीं D1 D4 6 T3 G3 Cg t शूर्पनखीं, D8 °नखा, G2 °णखा M2 वाक्य, M3 (before corr कृत्वा) स्मृत्वा (for स्मित्वा) Ś1 Ñ1 D1-3 तत सूर्पणखीं (Ś1 N1 शूर्पनखीं, D1 °खा) वाक्य —d) Ś1 वाक्यम्, M पुनर् (for युक्तम्) —For 8cd Ñ2 V B D5 7 subst

314* वीक्ष्य शूर्पणखा वाक्य ततस्तामिदमब्रवीत् ।
[ V सूर्पणखा B1 दृष्ट्वा (for ततस्) ]

9 a) D6 मम (hypm) (for मे) Ś1 Ñ V B D1-3 6 7 M3 दासी त्व (for मे दासी) —b) Ś1 Ñ V B Dm1 D1-3 5 7 8 G3 अर्हसि (for इच्छसि) —c) Ñ V B D1-3 6 7 योऽहम्, Ś1 एवमुक्तस्तु राक्षस्या (cf 8a) —d) D6 भ्राता (for भ्रात्रा) Dm1 D6 G2 3 M3 वर्णिनि (for °नी) Ś1 N1 D1 3 भ्रात्रा (Ś1 D1 °ता) कनकवर्णिनि (D2 °णी) N2 V B D5 7 भ्रात्रा ज्येष्ठेन भाविनी (V D5 7 °नि) ॐ Cg धकमलवर्णिनीत्यपि छेद ॐ —After 9 G3 ins

315* दासोऽहं राघवेन्द्रस्य ज्येष्ठस्य मम भामिनी ।

10 M3 om (hapl) 10ab Dg1 reads 10 in marg —a) B3 सिध्यर्था (for सिद्धा°) M2 सुखसिद्धासि सिद्धार्था —b) Dm1 D6 G1 2 वर (for [अ]मल) Ś1 Ñ1 D1 3 M1 2 शुचि (D1 3 °ति M1 2 मुदि) ता कामरूपिणी, Ñ2 V B D5 7 विद्युत् कामचारि (V2 °रूपि, B3 °तारि) णि —c) Ñ2 V B D5 7 [ए]व, D3 तु (for त्व) —d) Ś1 Ñ1 D1 3 भार्या भवितुमर्हसि

11 M1 om 11-12 —a) Dm1 D6 I1 2 G1 M2 3 Cg k पुना D3 एव, D2 वरा (for पुना) B1 अरूपम् (for रि°) D1 वृद्धा च (for असतीं) —b) Ś1 marg D5 8 करालीं (for °ला) Ś1 (sup lin also निम्नतो° as in D1) निर्दृतो°, V1 B3 निद्दृतो°, B1 (after corr as in text) D3 G1 2 निर्णितो D1 2 निम्नतो°, D5 7 विनतो°, M2 (after corr inf lin see m as in text) निर्मितो° (for निर्णतो°) ॐ Cr निर्णत विरतिशयनिम्नउदर यस्या सा ॐ —D3 reads from परित्यज्य n ° up to 15b in marg —c) D1 शीघ्र (for वृद्धा) G3 M1 transp भार्यां and वृद्धा —d) N2 V B D5 7 [अा]यां (for [ए]प) N8 D6 भविष्यति G3 भजे° (for भजि°)

12 M1 om D1 reads in marg 12 (for both cf v l 11) —a) N2 V B1 2 4 (marg also) D5 7 त्यक्त्वा, B3 4 Dm1 D6 G3 दृष्ट्वा (for श्रेष्ठ) —b) Dt1 T1 2 G M2 -वर्णिनी (for °नि) Ñ2 V B D5 7 दिव्य तव विलासिनि (B1 2 °नी) —c) Ś1 Ñ1 Dg1 Dm1 D6 मानुषेषु B1 °षीह, D7 °षीव (for °षीषु) —d) Ś1 Ñ V B D1-3 6 7 भाव कुर्याद् (by transp) D8 रति कुर्याद् (for कुर्याद्भाव)

13 D3 reads 13 in marg (cf. v l 11) —a) M1 इत्येव —b) Dt1 Dm1 D6 कराली Ś1 D3 निम्नतोदरी, Ñ2 D5 7 विनतो°, V1 B3 निद्दृतो°, D1 G1 2 निर्णितो°, D7 °तोदरा, M2 (after corr inf lin se m as in text) निर्मितो° (for निर्णतोदरी) —M1 om 13cd —c) Dg1 D6 8 T1 2 G1 2 M2 3 तथ्य Dm1 G3 पथ्य (for सत्य) Ś1 Ñ1 D1-3 राक्षसी तद्वच श्रुत्वा Ñ2 V B D5 7 मेने सा (V B2 3 च, B1 4 [ऽ]थ) सत्यमेवेति —d) Ś1 Ñ1 D1 3 परिहासविचक्षणा, Ñ2 V B D5 7 M2 परिहासगर्भिणी

14 D3 reads 14 in marg (cf v l 11) —a) Ś1 Ñ1 D1-3 राम तु (for सा रामं) —b) Ś1 Ñ1 D1-3 महाबल (for परंतपम्) —For 14ab, Ñ2 V B D5 7 M3 subst

316* तत सा राघव भूय समुपेत्य महाद्युतिम् ।
[ Ñ2 V B1-3 समुत्पत्य (for °पेत्य) ]

—c) Ś1 Ñ1 D1 3 ससीत त (D1 सु) दुराधर्ष —d) Ś1 N1 D1-3 अवदत् (for अब्रवीत्) V2 अब्रवीत्पूर्वदर्शना B3 इद वचनमब्रवीत् —After 14 Ñ2 V B D5 7 ins

317* अहं त्वदभिकामा च राम त्वत्पूर्वदर्शना ।
चिराय भव मे भर्ता सीतया किं तवानया ।

[(l 1) B1 दर्शनात्, D5 -दर्शन (for दर्शना) —(l 2) V1 मे भव (by transp) B1 [अ]नया (for °नया) ]

15 D3 reads 15ab in marg (cf v l 11) Ś1 om 15ab —a) D3 एता, I1(ed) Cm एना (for इमां) Dg1 अरूपाम्, M2 अनार्याम्, M3 करालाम् (for विरू°) —b) Dm1 D6 करालीं M3 विरूपा (for कराला) B3 3 (sup lin also as in text) निद्दृतो°, D1 3 निम्नतो°, D3 G1 2 निर्णितो°, D5 7 विनतो°, M2 (after corr as in text) निर्मितो G(ed) निम्नतो° (for निर्णतोदरीम्) 15ab - 11ab with v l इमां for एतां —c) Ś1 Ñ1 D1 2(m) 3 T3 G1 भार्यां वृद्धाम् (by transp) Ñ1 T3 परित्यज्य (for

अद्येमां भक्षयिष्यामि पश्यतस्तव मानुषीम् ।
त्वया सह चरिष्यामि निःसपत्ना यथासुखम् ॥ १६
इत्युक्त्वा मृगशावाक्षीमलातसदृशेक्षणा ।
अभ्यधावत्सुसंक्रुद्धा महोल्का रोहिणीमिव ॥ १७
तां मृत्युपाशप्रतिमामापतन्तीं महाबलः ।
निगृह्य रामः कुपितस्ततो लक्ष्मणमब्रवीत् ॥ १८
क्रूरैरनार्यैः सौमित्रे परिहासः कथंचन ।
न कार्यः पश्य वैदेहीं कथंचित्सौम्य जीवतीम् ॥ १९
इमां विरूपामसतीमतिमत्तां महोदरीम् ।
राक्षसीं पुरुषव्याघ्र विरूपयितुमर्हसि ॥ २०
इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्य पश्यतः ।
उद्धृत्य खड्गं चिच्छेद कर्णनासं महाबलः ॥ २१
निकृत्तकर्णनासा तु विस्वरं सा विनद्य च ।
यथागतं प्रदुद्राव घोरा शूर्पणखा वनम् ॥ २२ G 3 24 23 B 3 18 22 L 3 23 22

अवष्टभ्य ) —d ) Ś1 Ñ1 Dg1 Dm1 D1-3 6 G3 मा त्व न (by transp ) Ñ2 V2 B D4 M त्व मा न (by transp ) V1 त्व किं मा न (hypm ) D5 T G1 मा न त्व (by transp ) (for न मा त्व ) D5 त्व मा बहु न मन्यसे

16 a ) Ñ1 [अ]ह, M1 [ए]त (for [इ]मा) Ś1 D1-3 भक्षयिता(Ś1 °ष्ये)ह (for °ष्यामि) —b ) Ś1 D2 प्रेक्षतस् (for पश्यतस्) Ñ1 D1 3 प्रेक्षतस्ते ह(D3 हि) मानुषीं, Ñ2 V B D5 7 पश्यतस्तेति( V (B1-3 °सि )मानिन (V1 °नत ) —c ) Ñ2 रमिष्यामि (for चरि° ) Ñ2 V B D5 7 ततस्त्वया रमिष्येह( B1 °ष्यामि ) —d ) Ś1 Ñ2 D1 6 नि सपत्नो (for °त्ना )

17 a ) Ñ1 [ज]नुजपत्राक्षीम् (for मृगशावा° ) —b ) B3 (m also ) सालात (for अलात ) —c ) Dg1 Dt1 D1 T2 अभ्यगच्छत्, M2 °द्रवत् (for अभ्यधावत् ) D4 सुसक्रुद्धा (for °क्रुद्धा ) Ś1 Ñ2 V B D1 3 5 7 अभ्यधावत वैदेहीं (Ś1 D1 3 सक्रुद्धा ) —d ) V1 transp रोहिणीम् and इव

18 a ) D6 om M2 sec स for ता —b ) Ñ2 V B1 3 4 D5 7 महाबला, B2 अवेक्ष्य सा (sic) (for महाबल ) —After 18ab, B3 (om l 1 ) ins while B4 ins after 18

318* सा मृत्युपाशप्रतिमामापतन्तीमवेक्ष्य सा ।
प्राकंपत भयात्सीता प्रवाते कदली यथा ।
ततस्तां विकृतां रामो हन्तुं सीतामुपागताम् ।

[ For l 2, cf 3 2 14cd ]

—c ) Ñ2 V2 B1 3 4 D5 7 निवार्य, D1 विगृह्य (for निगृह्य ) Ñ1 परितस्, Ñ2 V B3 4 (m also as in text ) D5 7 कुपिता, G1 सहसा (for कुपितस् ) —For 18cd, B3 subst, while B4 cont after 318*

319* बलान्निगृह्य करयोर्लक्ष्मण वाक्यमब्रवीत् ।

—Then B4 cont

320* इमां पश्य महाबाहो राक्षसीं विकृताननाम् ।
सीतां हन्तुं व्यवसिता परिहासाविचक्षणाम् ।

19 a ) Ñ2 V सहर्षे, B D5 7 प्र(B1 सु )हृष्टे (for अनार्यै ) —b ) Ś1 Ñ V B D1 3 5 7 सप्रहास, D2 सप्रमग (for परिहास ) —c ) Dg1 marg, D5 om for न Ś1 Ñ1 V B D2 3 जीवति (for °तीम् ) —After 19 B2 ins

321* कृतपापापि न स्त्रीयाद्वधमर्हसि लक्ष्मण ।

20 a ) Ś1 D2 विरूढा (for विरूपाम् ) Ś1 Ñ V B D1-3 5 M2 दुर्वृत्ताम् (for असतीम् ) —b ) Ñ V B D1 3 5 7 G1 अतिवृद्धा( Ñ1 °त्ता ) D2 °मात्र, G2 M1 सुमध्या (for अतिमत्ता ) Ś1 महोदरी भयानका —d ) Ś1 Ñ2 V B D1 3 5 निवर्तयितुम्, D2 नासाकर्णनम् (for विरूपयितुम् )

21 a ) Ś1 Ñ V B D1-3 6 7 क्रुद्धस् (for तस्याः ) —b ) Ś1 Ñ V1 D1-3 ततो, V2 B D5 7 तस्य (for क्रुद्धो ) D1 T2 Ck पार्थिव, T1 वाक्यत (for पश्यत ) —c ) Ś1 Ñ1 D1 3 विकृत्य, D3 नि कृत्य (for उद्धृत्य ) —d ) Ś1 Ñ1 Dt1 Dm1 D3 6 T1 Ck t कर्णनासे, D1 3 G1 M2 °सां, G2 3 M2 °सौ, Cm g as in text (for °स ) —For 21cd, Ñ2 V B D5 7 subst

322* खड्गेन तस्याश्छित्त्वेव कर्णनासं निगृह्य ताम् ।

[ B1 3 -नासा (for -नासं ) ]

—After 21, M2 ins

323* प्रगृह्य बलवत्पीड्य करेणाकृष्य पातयत् ।
पादेनाक्रम्याग्रनासा पश्चात्तत्स्वपाविता (sic) ।

22 a ) V G2 विकृत्य, D6 निकृत्त, D8 निकृत, G1 विच्छिन्न (for निकृत्त ) Ñ2 D6 हि, D7 [आ]द (for तु) Ś1 निकृत्त कर्णनासा तु, M2 निकृत्त * * * सास्या (lacuna) —b ) D3 विस्वरे (for °र ) Ñ1 M2 तु (for सा) Ś1 Ñ1 Dm1 D1-3 वै (for च ) Ñ2 V B D5 7 विस्वर प्रति( B1 3 °वि )नद्य सा —cd ) Ś1 Ñ1 D2 विदुद्राव, Ñ2 V B D5 7 जगामाशु, D1 तु दुद्राव (for प्रदुद्राव ) Ś1 T2 3 G1 M2 शूर्पण(Ś1 T2 °न )खी, Dg1 सूर्पनखी, Dm1 सूर्पनखी (marg also °णखी ), D6 T2 शूर्पनखा Dg1 marg, D3 वने (for वनम् ) Ñ1 V1 D1-3 घोर सूर्पणखी( V1 D2 °खा, D1 °नखा ) वन (V1 तत ) (for d ) M2 मूर्योपि क्रोशमाना सा जगाम भ्रातर प्रति

G 3 24 25 B 3 18 23 L 3 23 23 सा निरूपा महाघोरा राक्षसी शोणितोक्षिता ।
ननाद विविधान्नादान्यथा प्रावृषि तोयदः ॥ २३
सा निक्षरन्ती रुधिरं बहुधा घोरदर्शना ।
प्रगृह्य बाहू गर्जन्ती प्रविवेश महावनम् ॥ २४
ततस्तु सा राक्षससंघसंवृतं
खरं जनस्थानगतं विरूपिता ।
उपेत्य तं भ्रातरमुग्रतेजसं
पपात भूमौ गगनाद्यथाशनिः ॥ २५
ततः सभार्यं भयमोहमूर्छिता
सलक्ष्मणं राघवमागतं वनम् ।
विरूपणं चात्मनि शोणितोक्षिता
शशंस सर्वं भगिनी खरस्य सा ॥ २६

इति श्रीरामायणे अरण्यकाण्डे सप्तदशः सर्गः ॥ १७ ॥

23 $Dt_1$ om $23^{ab}$ $\tilde{N}_2$ V B $D_{5\,7}$ transp $23^{ab}$ and $24^{ab}$ —$^{a}$) $D_1$ या (for सा) $Dm_1$ $D_3$ $G_3$ महानादा (for °घोरा) —$^{b}$) $\tilde{N}_1$ $D_{1-3}$ बहुधा( $D_3$ बहशो ) रुधिरोक्षिता, $\tilde{N}_2$ $D_{5\,7}$ राक्षसी भीमदर्शना, V B राक्षसी भीम( $V_1$ घोर)निस्वना —For $23^{ab}$ $\acute{S}_1$ subst while $D_{1-3}$ ins after $23^{ab}$

324* सा निरूपा प्रकृत्यैव वैरूप्य चागता परम् ।
[ $\acute{S}_1$ गता (for [आ]गता) ]

—$^{c}$) $G_2$ सुमहान् (for विविधान्) —$^{d}$) $D_3$ जलक्लिन्नेव दुंदुभि

24 $M_2$ om $24^{ab}$ $\tilde{N}_2$ V B $D_{5\,7}$ transp $23^{ab}$ and $24^{ab}$ —$^{a}$) $\tilde{N}_2$ V $B_{2-4}$ $D_{6\,7}$ निक्षिपती, $B_1$ च क्षरती (for निक्षरन्ती) $\tilde{N}_1$ विविध (for रुधिर) $\acute{S}_1$ $D_2$ सासृक्क्षरती विविध —$^{b}$) $\acute{S}_1$ $\tilde{N}$ $V_2$ B $D_{1\,5\,6\,7}$ रुधिरोक्षिता, $V_1$ शोणितोक्षिता, $Dg_1$ °न (for घोरदर्शना) —$^{c}$) $\acute{S}_1$ $V_1$ $D_1$ बाहु $\acute{S}_1$ $D_{2.5}$ वर्जती (for गर्ज°) —$^{d}$) $\acute{S}_1$ $Dg_1$ $D_3$ $M_2$ सहद्वन (for महा°) —After 24 $M_2$ ins

325* नानातरुसमाकीर्णं लतागहनसंकुलम् ।

25 $^{a}$) $\acute{S}_1$ $D_3$ च सा $Dg_1$ तु स, $G_1$ तदा $M_2$ तु तद् (for तु सा) $\acute{S}_1$ $D_{1-3}$ सेविते वने, $\tilde{N}_1$ राजसेविते, $N_2$ $V_2$ $B_{2.4}$ $D_{5\,7}$ संघ( $D_7$ ** )संकट, $Dg_1$ $Dm_1$ $D_3$ -संघवृत्त, $Dt_1$ -संवृत खर, $G_1$ °सेवित (for -संघसंवृत) —$^{b}$) $\acute{S}_1$ marg $D_3$ -गर्ते (for गत) $\acute{S}_1$ $D_2$ विरूपा (for °पिता) $\tilde{N}_1$ खर जगामाथ विरूपितासती —$^{c}$) $B_1$ उत्पत्य $\acute{S}_1$ $\tilde{N}$ V B $D_{1-3\,5\,7}$ चै (for तं) $Dg_1$ $Dm_1$ $D_{4\,6}$ T G $M_{1\,3}$ उग्र( $M_3$ अभ्र)दर्शन (for °तेजस) —$^{d}$) $\tilde{N}_2$ V B $D_5$ इव (for यथा)

26 $B_3$ reads 26 in marg —$^{a}$) $D_3$ सभार्या (for सभार्यं) $\acute{S}_1$ पीडित $\tilde{N}_1$ $D_{1-3}$ पीडिता (for -मूर्छिता) —$^{b}$) $D_3$ वने (for वनम्) —$^{c}$) $\acute{S}_1$ विरूपणाम्, $\tilde{N}_2$ $B_1$ $D_{5\,6\,7}$ विरूपित, $V_2$ °पिणे, $B_3$ °पताम् (for °पण) $\acute{S}_1$ $B_3$ स्वात्मनि (for चात्मनि) —$Dt_1$ om $26^{d}$ —$^{d}$) $B_3$ पराय- (for खरस्य) $D_5$ om for सा

Colophon —*Sarga name* $\acute{S}_1$ $\tilde{N}_2$ $V_1$ $B_1$ $D_{1\,2\,5}$ शूर्पणखा( $\acute{S}_1$ °नखी, $V_1$ $D_1$ सूर्प°, $D_3$ सूर्पणखी )विरूपकरण, $\tilde{N}_1$ $V_2$ $B_{2-4}$ शूर्पणखा( $\tilde{N}_1$ सूर्पणखी, $V_2$ सूर्प° )विरूपण, $D_6$ सूर्पणखीविरूपकरण, $D_7$ सूर्पणखाविरूपीकरण —*Sarga no* (figures words or both) $\acute{S}_1$ $\tilde{N}_1$ $B_{1\,4}$ $D_2$ om, $\tilde{N}_2$ $V_2$ $B_3$ $D_7$ 24 $V_1$ 23 $B_2$ 25 $Dg_1$ $Dt_1$ $Dm_1$ $D_{4\,6}$ T G $M_1$ 18 $D_1$ 22 $D_3$ 27 $D_5$ 14, $M_{2\,3}$ 19 —After colophon, G concludes with श्रीरामाय नम

१८

तां तथा पतितां दृष्ट्वा विरूपां शोणितोक्षिताम् ।
भगिनीं क्रोधसंतप्तः खरः पप्रच्छ राक्षसः ॥ १
बलविक्रमसम्पन्ना कामगा कामरूपिणी ।
इमामवस्थां नीता त्वं केनान्तकसमा गता ॥ २
देवगन्धर्वभूतानामृषीणां च महात्मनाम् ।
कोऽयमेवं महावीर्यस्त्वां विरूपां चकार ह ॥ ३
न हि पश्याम्यहं लोके यः कुर्यान्मम विप्रियम् ।
अन्तरेण सहस्राक्षं महेन्द्रं पाकशासनम् ॥ ४
अद्याहं मार्गणैः प्राणानादास्ये जीवितान्तकैः ।
सलिले क्षीरमासक्तं निष्पिबन्निव सारसः ॥ ५
निहतस्य मया संख्ये शरसंकृत्तमर्मणः ।
सफेनं रुधिरं रक्तं मेदिनी कस्य पास्यति ॥ ६
कस्य पत्ररथाः कायान्मांसमुत्कृत्य संगताः ।
प्रहृष्टा भक्षयिष्यन्ति निहतस्य मया रणे ॥ ७ G 3 25 7 B 3 19 10 L 3 24 7

## 18

D8 begins with ॐ, M1 with श्रीरामाय नमः

1 ᵃ) Ś1 दृष्ट्वा, Dg1 G M1 3 तदा (for तथा) Dg1 पतितां (for पतितां) Ś1 शक्रद् (for दृष्ट्वा) —ᶜ) Dg1 अंतिका (for भगिनीं) Ś1 क्रोधसपन्ना, Ñ1 D1 2 °सतप्ता, V B D6 7 M2 °ताम्राक्ष, D1 °सरक्ता, G1 °सदृप (for °सतप्त) —After 1, Dg1 Dt1 D4 6 T1 2 G M ins, while Dm1 D8 T3 ins l 1 and 6 after 1, and l 2–5 after 3ᵃᵇ

326* उत्तिष्ठ तावदाख्याहि प्रमोहं जहि सभ्रमम् ।
व्यक्तमाख्याहि केन त्वमेवरूपा विरूपिता ।
कः कृष्णसर्पमासीनमाशीविषमनागसम् ।
तुदत्यभिसमापन्नमङ्गुल्यग्रेण लीलया ।
कालपाशं समासज्य कण्ठे मोहान्न बुध्यते । [5]
यस्त्वामद्य समासाद्य पीतवान्विषमुत्तमम् ।

[ (l 1) M3 मुहूर्तं (for प्रमोहं) —(l 2) Dm1 G1 एवं रूप (for एवरूपा) —(l 4) M3 तदाति (sic) (for तुदति) G1 3 M3 [अ]भिसमासीनम्, M1 2 [अ]भगमागतम् (for [अ]भिसमापन्नम्) —G2 om from the post half up to केन in 2ᵈ —(l 5) D4 आसज्य (subm ) (for समासज्य) Dg1 T1 3 G1 2 M Cm g कः कालपाशमासज्य (for the prior half) M3 तु (for न) D6 कथने T3 G3 नागते Cmp जानते (for बुध्यते) ]

2 G2 om up to केना in ᵈ (cf v l 326*) —ᵃ) D2 सपन्ना (for -सम्पन्ना) —ᵇ) D2 कामगा (for कामगा) Ñ2 V B D7 यथाकामविचा( B2 [marg also] °हा)रिणी —ᶜ) Ñ2 V B D6 7 [अ]सि (for त्व) —ᵈ) G3 M2 3 [अं]तिकसमा (for [अ]न्तकसमा) Ś1 Ñ V B2–4 D1–3 6 7 युधि, B1 भुवि, Dg1 मता, Cvp मता (for गता)

3 ᵃ) Ñ2 D6 7 सिद्धानां (for भूतानाम्) —ᵇ) Ñ2 V B D6 7 मुनीनां (for ऋषीणां) Ñ2 D5 7 भावितात्मना (for च महा°) —After 3ᵃᵈ, Dm1 D8 T3 ins l 2–5 of 326* —ᶜ) Dg1 D8 G2 एव (for एव) B2 महासत्त्वा, Dm1 D8 G2 मम त्वां( G3 त्व ) हि, D4 T1 2 विरूपा त्वा (for महावीर्यस्) —ᵈ) B2 Dm1 D8 G3 विरूपा च( B2 हि ) D4 T1 2 महावीर्येद् (for त्वा विरूपा) Ñ V B D1 5 7 च, D1 स (for ह)

4 Dg1 reads 4ᵃᵇ in marg —ᵃ) Ś1 Ñ V B D2 3 5 7 त (for [अ]हं) —ᵇ) Dg1 क (for य ) Ś1 Ñ V B1–3 (marg also ईदृशा तव) 4 D1–3 5 7 अप्रिय मम (for मम विप्रियम्) —ᶜᵈ) Dg1 Dt1 Dm1 D8 T3 G3 M2 Cm अमरेषु Cmp as in text (for अन्तरेण) ※ Ct क्वचित्तु अंतरेण सहस्राक्षमित्येव पाठ ※ B2 पाकनाशन (for पाकशासनम्) M3 ऋते देवा सहस्राक्षान्महेंद्रात्पाकशासनात्

5 ᵃ) Ś1 Ñ1 V D1–3 तस्य Ñ2 B D6 7 कस्य (for अद्य) D7 प्राणं (for प्राणान्) —ᵇ) Ñ2 D5 7 नाशये, G2 आमास्ये (sic) (for आदास्ये) Ś1 जीवित शर्ैं, Dt1 D8 T1 2 G2 M2 3 Ct जीवितार्थं (for °न्तकै ) —ᶜ) D2 सलिले —ᵈ) Ś1 D2 निष्पिबेत्, M1 निष्पबन् (for निष्पिबन्) Ś1 Ñ1 D1 3 सारसो यथा, G2 इव सागर (sic) (for इव सारस ) —For 5ᶜᵈ Ñ2 V B D6 7 subst M2 cont after l 1 of 328*

327* सरस सलिल क्षीरमादित्सो रश्मिभिर्यथा ।
[ Ñ2 D6 7 सरसः B2 सवरे (for सरस ) ]

6 ᵃ) D4 मया सज्ये (sic) D7 G2 M1 3 मया सख (sic) M2 महासखे (sic) (for मया सख्ये) —ᵇ) V2 B2 3 शरेणाकृत्त, D1 शरसमात, D4 शरसयुक्त (for शरसकृत्त ) Ś1(also चर्मण ) -शर्मण Ñ2 V2 B1 4 D1 2 5 7 M2 -चर्मण, V1 -कर्मणा (for मर्मण ) —ᶜ) Ś1 सरोह, D2 अयोग्र (for सफेन ) Ś1 Ñ1 D1–3 तप्त, Ñ2 V B D5 7 M2 भूरि, Dt1 D8 कस्य, M3 स्निग्ध (for रक्त ) —ᵈ) Dt2 D6 पातुमिच्छति, D2 T3 तस्य पास्यति, D7 lacuna (for कस्य पास्यति) —After 6 M2 ins

328* कस्याद्य समरे जीवमासाद्य शरवृष्टिभि ।
क शिरस्यभिशापाय निश्चल स्वपते सुखम् ।
[ After l 1 M2 cont 327* ]

7 ᵃ) G1 गृध्रा (for कायान्) —ᵇ) Ś1 Ñ1 D1 2 मांसानि, D3 मासान् (for मासम्) V1 B1–4 Dg1 D4 T2 G1 M3

G 3 25 9
B 3 19 11
L 3 24 11

तं न देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
मयापकृष्टं कृपणं शक्तास्त्रातुं महाहवे ॥ ८
उपलभ्य शनैः संज्ञां तं मे शंसितुमर्हसि ।
येन त्वं दुर्विनीतेन वने विक्रम्य निर्जिता ॥ ९
इति भ्रातुर्वचः श्रुत्वा क्रुद्धस्य च विशेषतः ।
ततः शूर्पणखा वाक्यं सबाष्पमिदमब्रवीत् ॥ १०
तरुणौ रूपसम्पन्नौ सुकुमारौ महाबलौ ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ ११
गन्धर्वराजप्रतिमौ पार्थिवव्यञ्जनान्वितौ ।
देवौ वा मानुषौ वा तौ न तर्कयितुमुत्सहे ॥ १२
तरुणी रूपसम्पन्ना सर्वाभरणभूषिता ।
दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा ॥ १३
ताभ्यामुभाभ्यां संभूय प्रमदामधिकृत्य ताम् ।
इमामवस्थां नीताहं यथानाथासती तथा ॥ १४

उद्धृत्य (for हत्कृत्य) Ś1 Ñ1 D1 3 सत्वरा, N2 V B D6 7 सगत, D8 सत्वर, G1 सगता (sic) (for सगता) —c) D4 प्रहृष्टे (sic) D5 प्रविष्ट (for प्रहृष्ट) D2 सप्रहृष्टा भविष्यति —d) Ś1 Ñ V B D2 3 5 7 युधि, D1 मृधे (for रणे)

8 a) Ś1 Ñ1 D2 तत्र, D7 तेन (for तं न) Dm1 न देवा न च गन्धर्वा —b) Ñ2 V B D6 7 दानवा (for राक्षसा) Dt1 D8 पिशाचा न च राक्षसा —c) Ś1 Ñ V B D1–3 5 7 M2 [उ]पसृष्ट(Ś1 °ष्टे M2 °ष्ट) Dm1 D6 8 T2 [अ]प्रकृष्ट, D4 [अ]विकृष्ट (for [अ]पकृष्ट) —d) M3 शक्ता स्यातु (for शक्तास्त्रातु) Ś1 N2 V2 D2 3 महामृधे D1 अथा युधि, D4 5 आहवे (subm) D5 G1 3 इहाहवे (for महाहवे) Dg1 T अ(Dg1 न)शक्तास्त्रातुमाहवे, G2 शक्ता रक्षितुमाहवे

9 a) M1 B3 (also) Dm1 D8 G3 सत (for शनै) —b) M2 सम (for तं मे) —c) T3 एका, M2 क्षेम (for येन) —d) Ś1 Ñ1 D1–4 M2 रणे (for वने) D4 T1 2 G1 2 निष्क्रम्य, D5 निक्रम (for विक्रम्य) N2 V B D5 7 विरूप(N2 D5 7 °वर्ण)वदना कृता

10 a) Ś1 Ñ1 B2 4 D1 3 7 भ्रातु (for भ्रातुर्) —b) Ś1 D2 तु (for च) N2 V B D6 7 क्रुद्धस्य वदतस्तथा, M1 क्रोधयुक्त विशेषत —After 10ab Dg1 T1 ins

329* रावणस्य विनाशाय खरस्य च तथा सती ।
राक्षसानां विनाशाय कुलस्य स्वजनस्य च ।

—c) Ś1 Dm1 D2–4 T2 G1 शूर्पणखी (for °खा) —d) Ñ2 V B D6 7 बाष्पगद्गदमब्रवीत्

11 b) M2 महाभुजौ (for महाबलौ) —c) M1 पुण्डरीकपलाशाक्षौ ❀ Cv चीरकृष्णाजिनाम्बरावित्यत पर फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ । पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ । इत्येष कोशेषु अंशितश्लोकश्च दृश्यते । अन्यथा व्यक्तमायावादि केन रूमेवरूपा विरूपितेत्यादि खरप्रश्नस्य उत्तरतो घटते ❀ —After 11 Dg1 Dt1 Dm1 D4 6 8 T G M1 3 ins while M2 ins after 12

330* फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ ।
पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ ।

[(l 1) Dg1 Dm1 फलमूलाशिनौ (for °शनौ) and ब्रह्मचारिणौ (for धर्म°) —(l 2) M1 3 [इ]मौ (for [आ]स्तां) M2 धर्मचारिणौ (for रामलक्ष्मणौ) Cv alone supports this passage after st 11]

—G3 cont

331* शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम् ।

12 a) T3 G1 M3 दानवौ (for मानुषौ) Ñ1 तौ वा (by transp) Cr वा कौ (for वा तौ) N2 V2 B1 3 4 D6 7 देवौ वा तौ मनुष्यौ वा, V1 B2 देवौ तौ वा मनुष्यौ वा, Dt1 D4 देवौ वा दानवावेतौ —After 12 Ñ2 V B D6 7 ins

332* आश्रमसभासितौ वीरौ राजपुत्रौ मनस्विनौ ।
तापसौ च धनुष्पाणी सिंहविक्रान्तगामिनौ ।
त्वदीयं वनमाक्रम्य कृत्वा चाश्रममण्डलम् ।
तत्र तौ वल्कसम्पन्नौ वसतो रावणानुज ।

[(l 1) V आश्रमान भावितौ वीरौ B1 पुण्डरीकपलाशाक्षौ (for the prior half) V यशस्विनौ (for मनस्विनौ) —(l 2) B3 तौ (for च) B2 विक्रम (for विक्रान्त) —(l 3) B4 वासम् (for वनम्) V1 B4 आक्रिश्य (for आक्रम्य) Ñ2 D7 R, D5 च (for च) —(l 4) Ñ2 D6 7 ततस् (for तत्र) V वनसम्पन्नौ (for वल्कसम्पन्नौ) B2 वसतौ (for वसतो)]
—After 12 M2 ins 330* and then cont (followed by 335*)

333* तयोः समीपे युवती सर्वाभरणभूषिता ।

13 c) V1 B1–3 D6 7 दृष्ट्वा (for दृष्टा) —After 13 M2 ins

334* अथ ताभ्यां समागम्य वैरूप्यं कृतमीदृशम् ।

—Thereafter cont l 1 of 336*

14 For 14ab, N2 V B D6 7 subst M2 cont after 333*

335* ता च तौ चाहमारभ्य बलाद्रक्षयितुं वने ।

[M2 स्वयम् (for चाहम्) Ñ2 आलभ्य (for आरभ्य) D6 7 ता तदैवाहमारभ्य (for the prior half) M2 तदा (for वने)]
—D4 om (hapl) 14c–16d. —c) Ś1 Ñ V B D1–3 5 7 [अ]स्मि (for [अ]हं) —d) Ś1 Ñ V1 B D1–3 5 7 G2 यथानाथवती तथा, Dm G2 M1 3 यथानाथासती तथा —After 14 Ñ2 V B D6 7 ins while M2 cont l 1 after 334* and ins l 2 after 14

तस्याश्चानृजुवृत्तायास्तयोश्च हतयोरहम् ।
सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि ॥ १५
एष मे प्रथमः कामः कृतस्तात त्वया भवेत् ।
तस्यास्तयोश्च रुधिरं पिबेयमहमाहवे ॥ १६
इति तस्यां ब्रुवाणायां चतुर्दश महाबलान् ।
व्यादिदेश खरः क्रुद्धो राक्षसानन्तकोपमान् ॥ १७
मानुषौ शस्त्रसम्पन्नौ चीरकृष्णाजिनाम्बरौ ।
प्रविष्टौ दण्डकारण्यं घोरं प्रमदया सह ॥ १८
तौ हत्वा तां च दुर्वृत्तामुपावर्तितुमर्हथ ।
इयं च रुधिरं तेषां भगिनी मम पास्यति ॥ १९
मनोरथोऽयमिष्टोऽस्या भगिन्या मम राक्षसाः ।
शीघ्रं संपाद्यतां गत्वा तौ प्रमथ्य स्वतेजसा ॥ २०
इति प्रतिसमादिष्टा राक्षसास्ते चतुर्दश ।
तत्र जग्मुस्तया सार्धं घना वातेरिता यथा ॥ २१ G 3 25 25 B 3 19 26 L 3 24 2

इति श्रीरामायणे अरण्यकाण्डे अष्टादशः सर्गः ॥ १८ ॥

---

336* कोशन्त्या विस्फुरन्त्याश्च बलादाक्रम्य सयुगे ।
त्वया साधेन पश्येमा धर्षणा मम वै कृताम् ।

[ Ñ2 B4 D5 7 आक्रम्य (for आक्रम्य) —(l 2) V1 त्वयि नाथे तु B1 त्वया स्थेन (sic) B1(marg also) त्वयि नाथेपि (for त्वया साथेन) ]

—Thereafter M2 cont 337*

15 D4 om 15 (cf v l 14) —a) Ś1 तु (for च) Ñ1 तथाति (for तस्याश्च) —b) Ś1 Ñ1 D1-3 त्वया Dm2 त्वह (for अहम्) D8 हतयोरस्यह (sic) —For 15ab Ñ2 V B D5 7 subst while M2 cont after l 2 of 336*

337* तत्प्रमादात्तयोश्चैव तस्याश्चैव निशाचर ।

—d) M3 हतयो (for रुधिर) Ñ1 **सविपु (for रणमूर्धनि)

16 D4 om 16 (cf v l 14) V3 illeg up to वीर in b —a) V1 मद (for एष) Ś1 D2 परम, Ñ2 V1 B D5 7 [s]भिम(B1 D5 °हि)त (for प्रथम) Dt1 om काम —b) Dg1 Dt1 Dm1 D8 3 T2 G2 तत्र (for तात) Ś1 D1 भवेत्त्वया (by transp ) (for त्वया भवेत्) Ñ1 कृत देहयोस्त्वया (sic) Ñ2 B D5 7 त्वयाऽतीव कृ( D5 7 °या तात्कृ)तो भवेत्, V त्वया वीर( V3 illeg ) कृतो भवेत्, D2 कृतदासा भवेत्त्वया, D3 कृतस्तावन्नयेत्त्वया —c) Ś1 Ñ V B D1-3 5 7 M1 तयोस्तस्याश्च (by transp ) —d) Ś1 Ñ1 D1-3 यत्पिबेय चमूमुखे, Ñ2 V B D5 7 यत्पिबेयमहं युधि

17 a) D4 इमामवस्था (hypm ) (for इति तस्यां) Ñ2 V B D5 7 इत्युक्त्वा स तथा( Ñ2 D5 7 °दा ) तत्र( V1 वीरस्तु ) —b) Ñ2 V B D5 7 निशाचरान् (for महाबलान्) —c) B1 आदिदेश Ś1 Ñ1 D1-3 M1 ततः (for खर ) —After 17 M2 ins

338* धूम्रः शूरो हरिः पतुर्मीपणोभ्रो दको दरि ।
मणिमैन्द्र शुभ्रमाली माल्या वशी चतुर्दश ।

18 a) Ś1 B1 D4 4 T2 M1 रूपसम्पन्नौ D2 सत्व° (for शस्त्र°) —b) Ñ1 ततश्चैव महाबलौ —c) D7 दण्ड *

—After 18 G2 ins

339* युष्माभिस्तौ निहन्तव्यौ तपसौ तापसाविमौ ।

19 a) V1 B1 ता (for तौ) V1 B1 तौ (for ता) V1 B1 दुर्वृत्ता (for दुर्वृत्ताम्) —b) Cm g अपावर्तितु (for उपा°) —c) Ñ2 B2 4 D5 7 M2 ममेय, V ममैषा B1 यतो मे (for इयं च) Ñ2 V B Dt2 Dm1 D5 6 M2 भगिनी (for रुधिरं) D3 इय तु रुधिर तेषा —d) Dt2 Dm1 D4 5 6 रुधिर (for भगिनी) Ñ2 V B D5 7 M2 पातुमिच्छति( B2 °सि ) शोणित ※ Ct मम भगिनी तेषा रुधिर पास्यतीत्यन्वय । अत्र रुधिर मम पास्यतीति विपरीतार्थाभिव्यक्तिवाक्येन तेषा सन्निधानप्रयुक्तो बुद्धिमोह सूचित कविना ※ —After 19 M2 ins

340* चिप्र सपाद्यतामद्य तौ हत्वा रामलक्ष्मणौ ।

20 T2 om 20 —a) Ñ2 V B D5 7 तु (for ऽस्या) Ś1 मनोरथोयशिष्टोस्या —c) D4 सपद्यता K(ed ) तौ च (for गत्वा) Ñ2 B2-4 D5 7 चिप्र सपाद्यतामद्य, V चिप्र सपा( V2 °प )द्यतामेव B1 चिप्र प्रगाध्यतामद्य —d) D3 त (for तौ) Ś1 प्रमाय्य (for प्रमथ्य) Ñ1 वध च मम तु तेनसा (sic) Ñ2 V B D5 7 प्रमथ्य( V °थ्या ) स्वेन तेजसा —After 20 Ś1 Ñ V B Dt1 D1-3 5-7 G1 M ins

341* युष्माभिर्निहतौ दृष्ट्वा तावुभौ भ्रातरौ रणे ।
इय प्रीता च हृष्टा च युधि पास्यति शोणितम् ।

[ (l 1) Dt2 om भ्रातरौ —(l 2) Ñ1 च हृष्टा प्रीता (for प्रीता च हृष्टा) D3 M2 इय प्रीता प्रहृष्टा च (for the prior half) Ś1 Ñ1 D1 3 क्षतज युधि पास्यति (for the post half) Dt2 D6 G1 M1 3 इय प्रहृष्टा( G1 M3 प्रीता च ) मदिना रुधिर युधि पास्यति ]

21 b) Ś1 Ñ2 V B D1-3 5 7 शूलपाणय (for ते चतुर्दश) —c) Ś1 Ñ V1 B2 3 4 D1-3 5 [ अ ]जग्मुस् (for जग्मुस्) G1 तथा (for तया) —d) Ñ2 B2-3 D5 7 Cm t मेघा Dt1 D6 घन (for घना) Ñ V B2 3 4 Dt1 D1 3 5-7 इव (for यथा) Ś1 D2 राघवौ यत्र तिष्ठत —After 21 Ñ2 V B D5 7 ins

१९

G 3 26 1 B 3 20 1 L 3 25 1 ततः शूर्पणखा घोरा राघवाश्रममागता ।
रक्षसामाचचक्षे तौ भ्रातरौ सह सीतया ॥ १
ते रामं पर्णशालायामुपविष्टं महाबलम् ।
ददृशुः सीतया सार्धं वैदेह्या लक्ष्मणेन च ॥ २
तान्दृष्ट्वा राघवः श्रीमानागतां तां च राक्षसीम् ।
अब्रवीद्भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् ॥ ३
मुहूर्तं भव सौमित्रे सीतायाः प्रत्यनन्तरः ।
इमानस्या वधिष्यामि पदवीमागतानिह ॥ ४
वाक्यमेतत्ततः श्रुत्वा रामस्य विदितात्मनः ।
तथेति लक्ष्मणो वाक्यं रामस्य प्रत्यपूजयत् ॥ ५

342* ततो यद्युस्ते परममहारिण
प्रकम्पयन्त पृथिवीं सकाननाम् ।
खराशया रामरणावमर्दने
कृतोद्यमा दैत्यवरा इवाहवे ।

[(l 1) V प्रतस्थु (for यद्युस्ते) —(l 2) Ñ2 D5 7 सकम्पयन पृथिवीं ससागरा —(l 3) Ñ2 D5 7 रामबलाभिमर्दने B1 4 रामबलावमर्दने (for रामरणावमर्दने) —(l 4) Ñ2 D5 7 कृतश्रमा (for कृतोद्यमा) ]
while D3 ins after 21

343* ते रामं पर्णशालायामुपविष्टं परंतपम् ।
ददृशुः सीतया सार्धं लक्ष्मणेन तथैव च ।
[Cf 3 19 2]

—D3 cont Ś1 Ñ1 Dg1 Dm1 D1 2 4 8 T1 2 G M1 2 3 ins after 21

344* ततस्तु ते तं समुदग्रतेजसं
तथा सुतीक्ष्णप्रदराश्च राक्षसाः ।
न शक्नुवन्सहसा प्रमर्दितुं
वने द्विपा दावमिवाभिमुच्छ्रितम् ।

[(l 1) Ś1 तत्र समेद्धतेजस Ñ1 G2 तत्र समग्रतेजसं Dm1 D5 G3 तानिद्धुमोज्ज्वल D1 2 तान समुदग्रेतत D4 तत्र समुद्धतेजस G1 तं समुदग्रचेतस (for ते समुदग्रतेजसं) —(l 2) Ś1 Ñ1 D1 2 तथापि (Ñ1 D1 °था तु) तीक्ष्णाप्रमदा (Ś1 °दृशा) श्च राक्षसा Dg1 तथा ह तीक्ष्णप्रदरा निशाचरा D3 तथा सुतीक्ष्णप्रदराश्च राक्षसा (sic) D4 T1 2 G1 तथा (G1 °दा) सुतीक्ष्णप्रदरा (T1 G1 °वरा) निशाचरा G2 तथा हि तीक्ष्णप्रदरा हि राक्षसा A (ed) तथापि तीक्ष्णाग्र्या निशाचरा —(l 3) Ñ1 स्वीकर्तुं Dg1 प्रमादितुं D4 T1 2 दुराम° (D4 °नुम) भवितुं न शक्नुवन् (T2 शक्ता) —(l 4) Ś1 (marg also) यथा (for द्विपा) Dg1 D4 T1 2 वनद्विपा (for वने द्विपा) Dg1 उपम D4 उपस्थता (sic) T2 उत्तम (for उच्छ्रितम्) ]

Colophon —*Sarga name* Ś1 Ñ1 D2 राक्षसप्रेषण (D2 °ण) Ñ2 D5 7 सैन्यप्रयाण (D5 °प्र)ण V खरप्रहितराक्षसप्रयाण B1 3 खरप्रहितराक्षसप्रयाण B2 खरप्रहितचतुर्दशराक्षसप्रयाण B4 खरप्रहितरक्षःप्रयाण D1 2 राक्षसप्रयाण (D2 °प्रवेश) —*Sarga no* (figures words or both) Ś1 Ñ1 B1 3 D5 6 om Ñ2 V2 D7 25 V1 24 B2 4 26 Dg1 Dt1 Dm1 D4 6 8 T G M1 19 D1 23 D2 28 M2 3 20 —After colophon G conclude with श्रीरामाय नमः

19

D3 begins with ॐ M1 with श्रीरामाय नमः

1 a) Ś1 Ñ1 D1–3 M2 सा तु (for ततः) Ś1 Ñ1 Dm1 D3–4 T3 M2 3 शू (D2 3 सू) र्पण (Ś1 D4 T3 °न) खी, Dg1 D1 3 सू (D3 शू) र्पनखा (for शूर्पणखा) —D5 om 1c–2 —c) Ñ1 B2 Dg1 Dt1 Dm1 D1 2 3 7 राक्षसान् (for रक्षसाम्) Ñ2 V B D1 5 7 [s]थ (for तौ) Ś1 राक्षसानाचचक्षेथ D3 राक्षसानामाचचक्षे —d) Ś1 Ñ V B D1–3 7 M3 राघवौ (for भ्रातरौ) Dg1 रामलक्ष्मणौ (for सह सीतया)

2 D6 om 2 (cf v l 1) —a) D4 त (for ते) —b) V1 आसीनं च (for उपविष्टं) Ñ2 महावन (for °बलम्) —D1 om 2c–3c —c) Ś1 Ñ1 D2 3 आसीन (for वैदेह्या) Ñ2 V B D7 लक्ष्मणेन च धीमता Dt1 Dm1 D6 8 लक्ष्मणे चापि संस्थित M2 भ्रातर सहलक्ष्मण

3 D1 om 3abc (cf v l 2) —a) Dt1 तौ, D4 6 ता (for तान्) V B D3 क्रूरान् (for श्रीमान्) Ś1 Ñ1 D2 तान्दृष्ट्वा राक्षसान्घोरान् —b) Ś1 Ñ1 Dt1 D4 6 T1 आगतान्, Ñ2 B D5 7 राक्षसान् (for आगताम्) Ś1 Ñ1 B1 2 Dt1 D2 ताश्च M1 चापि (for तां च) Dt1 D6 राक्षसान् (for °सीम्) V1 राक्षसान्राक्षसीं च ताम् —c) G1 राघव (for भ्रातरं) —d) T1 damaged for दीप्ततेजसम्

4 a) B3 मुहूर्तमत्र सौमित्र —b) Ñ2 V B D5 7 वैदेह्या (V2 B4 ह्या) (for सीतायाः) B2 प्रत्यनतर (for °नन्तरः) Ś1 D1 3 सीतया प्रत्यनन्तर (D3 °र) —B2 reads 4c–5 in marg —cd) Ś1 Dg1 D1 3 T1 इमानद्य M2 यावद्दृष्टा (for इमानस्या) Ś1 Ñ1 Dm1 D1 2 3 सह (for इह) Ñ2 V B D5 7 यावद्विहन्मि रक्षांसि घोराणीमानि संयुगे

5 B1 reads 5 in marg (cf v l 4) —a) Ś1 Ñ1 D2 एव, D3 एव, D1 ए* (for एतत्) Ś1 Ñ1 तु तच्छ्रुत्वा, Ñ2 V B D5 7 उपश्रुत्य (B4 °त्वा) D1 तु संश्रुत्य (for ततः श्रुत्वा) —b) Ñ2 V B D5 7 [अ]मिततेजसः (for विदितात्मनः) —c) Ś1 D2 उत्थाय (for तथेति) —d) Dt1 D6 राघवस्य प्रपूजयत् —For 5cd Ñ2 V B D5 7 M3 subst

345* तथेत्युक्त्वा स वैदेह्या अभवत्प्रत्यनन्तरः ।

[M2 [अ]थ (for स) B4 चाभवत्, M2 सोभवत् (for अभवत्) B2 प्रत्यनतर ]

राघवोऽपि महच्चापं चामीकरविभूषितम् ।
चकार सज्यं धर्मात्मा तानि रक्षांसि चाब्रवीत् ॥ ६
पुत्रौ दशरथस्यावां भ्रातरौ रामलक्ष्मणौ ।
प्रविष्टौ सीतया सार्धं दुश्चरं दण्डकावनम् ॥ ७
फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ ।
वसन्तौ दण्डकारण्ये किमर्थमुपहिंसथ ॥ ८
युष्मान्पापात्मकान्हन्तुं विप्रकारान्महावने ।
ऋषीणां तु नियोगेन प्राप्तोऽहं सशरासनः ॥ ९
तिष्ठतैवात्र संतुष्टा नोपसर्पितुमर्हथ ।
यदि प्राणैरिहार्थो वो निवर्तध्वं निशाचराः ॥ १०
तस्य तद्वचनं श्रुत्वा राक्षसास्ते चतुर्दश ।
ऊचुर्वाचं सुसंक्रुद्धा ब्रह्मघ्नाः शूलपाणयः ॥ ११
संरक्तनयना घोरा रामं रक्तान्तलोचनम् ।
परुषा मधुराभाषं हृष्टादृष्टपराक्रमम् ॥ १२
क्रोधमुत्पाद्य नो भर्तुः खरस्य सुमहात्मनः ।
त्वमेव हास्यसे प्राणानद्यास्माभिर्हतो युधि ॥ १३
का हि ते शक्तिरेकस्य बहूनां रणमूर्धनि ।
अस्माकमग्रतः स्थातुं किं पुनर्योद्धुमाहवे ॥ १४ G 3 16 14 B 3 0 14 L 3 15 14

6 a) N2 V B D5 7 रामोऽपि सु (for राघवोऽपि) —b) Ś1 Ñ1 D1-3 कार्तस्वर (for चामीकर) —c) D1 2 4 T2 G2 सज्ज (for °ज्य) —d) T1 damaged from ब्रवीत् up to रा in 7b M2 सोऽब्रवीत् (for चा°)

7 T1 damaged up to रा in 7b (cf v l 6) —D6 reads 8cd in place of 7cd, repeating 8cd in its proper place —c) Dt1 om Dm1 प्रविष्ट (sic) (for °ष्टौ) G2 दण्डकारण्य (for सीतया सार्धं) —d) Ś1 Ñ V1 B1-3 D1-3 5 7 M3 दण्डक वन, G2 सीतया सह, M3 दण्डकानन (for दण्डकावनम्)

8 a) V1 B2 Dg1 D6 फलमूलाशिनौ Ñ1 युक्तौ (for दान्तौ) Ś1 D1 3 फलमूलाशने युक्तौ —b) Ś1 N1 D1-3 धर्मसहि(D1 3 °स्थि)तौ, Ñ2 V B1 2 4 D5 7 °माश्रितौ Dm1 ब्रह्म° (for धर्मचारिणौ) —D6 reads 8cd in place of 7cd repeating it here —c) D4 दण्डकारण्य (for °ण्ये) Ś1 D2 3 प्रविष्टौ दण्डकारण्य(D3 °ण्ये) —d) Ś1 N1 D1-3 उपधावत, Ñ2 V B D1 7 मपि(B3 °ति)धावथ Dm1 D5 उपहिंसथ (for °हिंसथ)

9 a) Dm1 D6 G3 M3 पापात्मनो (for °त्मकान्) Ś1 Ñ1 D1-3 युष्मत्पापात्मसंभ्यो —b) Ś1 D1 3 महा(D3 °हद्)वन (for महावने) —c) Ś1 N V B D1 5 7 विनियोगेन (for तु नि°) —d) Dt1 Dm1 D4 6 G3 Cr k t सप्राप्त (for प्राप्तोऽहं) —T1 damaged from श up to वो in 10a Dg1 Dm1 D4 5 T2 3 G1 3 Cr k सशरायुध Ct as in text (for °सन) Ś1 D1-3 प्राप्तौ च(D1 स्व, D3 स्म) सशरासनौ Ñ2 M1 सप्राप्तौ सशरासनौ(M1 °युधौ) —For 9 Ñ2 V B D5 7 subst

346* युष्मद्विप्रकृते पूर्वमृषिभि शंसितव्रतै ।
नियुक्तावागतौ दुर्गमावां घोरमिदं वनम् ॥

[(l 1) V2 युष्माभिर्विकृते, B2 असद्विप्रकृते B1 4 संशितव्रतै —(l 2) V नियुक्तावागतौ ]

10 T1 damaged for 10abc (cf v l 9) —a) Ś1 Ñ1 D3 [अ]त्रैव हि तुष्टा(Ñ1 तुष्ट नो, D2 तुष्टास्ता) Dm1 T2 3 M3 Cmp [प्]वात्र सतुष्टा, D1 M2 Cg k [अ]त्रैव सतुष्टा (for [ए]वात्र सतुष्टा) Ñ2 V B D5 7 इत एव(B4 °व) निवर्तध्व Ct as in text —b) D2 [अ]पसर्पितुम्, M1 निवर्तितुम्, M3(after corr sec m as in text) Cmp [उ]पा°, B(ed) K(ed) Cg k t [उ]पावर्ति°, Ctp as in text (for [उ]पसर्पितुम्) —c) Dg1 reads from रि up to d in marg Dg1 इवार्थो, D1 2 °र्थं (for इहार्थो) V1 B Dm1 T3 वा (for वो) M2 यदि प्राणैर्हि व इच्छ

11 a) Ñ2 V B D5 7 इति रामवच श्रुत्वा —b) Ś1 एव, Ñ V2 B D1 5 7 वच, V1 G1 M2 वाच, Dg1 T3 वाक्य (for वाच) Ś1 [अ]तिसरब्धा, Ñ V B D5 6 7 °रब्धा, D3 समसंक्रुद्धा (for सुसंक्रुद्धा) D1 क्रुद्धवंचनसरब्धा —d) Ś1 Ñ V B D1-3 5 7 शूलपट्टिश(Ś1 Ñ1 D1 3 °मुद्गर)पाणय

12 K(ed) reads 12 in brackets —a) M3 सरब्ध (for °क्त) Ś1 Ñ V B D1 3 5 7 M1 2 क्रोधसरक्तनयना —b) Dg1 Dt1 D4 6 T G2 सरक्त (for रक्तान्त) —Dg1 D4 T G2 om 12cd —M2 reads 12cd inf lin sec m —c) Ś1 V1 पुरुषा, G1 °ष (for परुषा) Ś2 मधुराभाष, D1 °लाप (for मधुराभाष) —d) Ś1 दुष्टादुष्ट Ñ V B D1 2 5 7 दृ(B1 sup lin also इ)ष्टादृष्ट (D3 दृष्ट) Dm1 D5 G3 M3 हृष्टादृ(D6 °दु)ष्ट, D1 M2 हृष्टादृष्ट G1 दृष्टादृष्ट, M1 दृष्टादृष्ट (for हृष्टादृष्ट) Ct अदृष्टपराक्रममिति छेद

13 a) G3 कोपम् (for क्रोधम्) V2 से (for नो) —b) M3 क्रूरस्य (for खरस्य) M3 तु (for सु) —c) Ś1 Ñ1 D1-3 मोक्ष्यस Ñ2 V B D5 7 त्यक्ष्यसि Dg1 Gm °सि M3 °ते (for हास्यसे) —d) Dm1 D6 राम (for अद्य) D1 2 मृधे, D3 रणे (for युधि) Ś1 हतोऽस्माभिर्महामृधे, Ñ1 हतोऽस्माभिर्हतो मृधे, Ñ2 V B D5 7 M3 अस्माभि समरे हत (B3 °तान्) G1 अस्माभिर्निहतो युधि

14 b) Ś1 बहुना (for बहूनां) G3 रणमूर्धनि

G 3 20 15 B 3 20 15 L 3 25 15

एभिर्बाहुप्रयुक्तैर्नः परिघैः शूलपट्टिशैः ।
प्राणांस्त्यक्ष्यसि वीर्यं च धनुश्च करपीडितम् ॥ १५
इत्येवमुक्त्वा संरब्धा राक्षसास्ते चतुर्दश ।
उद्यतायुधनिस्त्रिंशा राममेवाभिदुद्रुवुः ।
चिक्षिपुस्तानि शूलानि राघवं प्रति दुर्जयम् ॥ १६
तानि शूलानि काकुत्स्थः समस्तानि चतुर्दश ।
तावद्भिरेव चिच्छेद शरैः काञ्चनभूषणैः ॥ १७
ततः पश्चान्महातेजा नाराचान्सूर्यसंनिभान् ।
जग्राह परमक्रुद्धश्चतुर्दश शिलाशितान् ॥ १८
गृहीत्वा धनुरायम्य लक्ष्यानुद्दिश्य राक्षसान् ।
मुमोच राघवो बाणान्वज्रानिव शतक्रतुः ॥ १९
रुक्मपुङ्खाश्च विशिखाः प्रदीप्ता हेमभूषणाः ।
अन्तरिक्षे महोल्कानां बभूवुस्तुल्यवर्चसः ॥ २०
ते भित्त्वा रक्षसां वेगाद्वक्षांसि रुधिराप्लुताः ।
विनिष्पेतुस्तदा भूमौ न्यमज्जन्ताशनिस्वनाः ॥ २१

15 $^a$) Ś1 Ñ1 D2 एष, Ñ2 V B1 • D3 अस्माद्, B2 तस्माद्, B3 D7 मत्साद् Dg1 T3 M3 एहि, D1 एका (sic) D2 एव (for एभिर्) Ś1 V2 प्रयत्नैर्, Ñ1 B1 2 Dg1 D2 3 4 7 प्रमुक्तैस्, Dm1 D5 G1 3 विमुक्तैर् (for -प्रयुक्तैर्) Ñ1 om Ñ2 V B D5 त्व, Dg1 Dt1 D6 च (for नः) —$^b$) Dg1 G M3 शूलपट्टिशैः (Dg1 G1 °शैः) D1 T °पट्टिशैः, M2 °मुद्गरैः (for शूलपट्टिशैः) Ś1 Ñ1 D1-3 परिघप्रासतोमरैः, Ñ• V1 D5 7 शूलमुद्गरपट्टिशैः, V2 B शूलपट्टिशमुद्गरैः, M3 शूलैः परिघपट्टिशैः —$^c$) D5 त्यक्ष्यति M2 त्यजसि (for त्यक्ष्यसि) —$^d$) Ñ2 V B D5 7 (इ)द विचेतन (D7 °न) D2 T2 स (T2 स)र° (for करपीडितम्)

16 $^a$) T1 2 G2 M3 सक्रुद्धा (for संरब्धा) Ñ2 V B D5 7 एवमुक्त्वा सु(V तु)संरब्धा —After 16$^{ab}$ Dm1 D5 read 20$^{cd}$ —Dg1 D6 T G1 2 M3 om 16$^{cd}$ —M2 transp 16$^{cd}$ and 16$^{ef}$ —K(ed.) reads 16$^{cd}$ in brackets —$^d$) Ś1 V B D1-3 6 7 समभिदुद्रुवु (for एवाभि°) M1 तावुभावभिदुद्रुवु M• सहसा राममाद्रवन् —After 16$^{cd}$ M2 3 ins. only l. 1–2 of 347* —$^f$) M1 2 दुर्जया (for °यम्)

17 $^b$) M2 रणाजिरे (for चतुर्दश) —$^d$) Dg1 Dt1 D6 G1 2 M3 काञ्चनभूषितैः

18 $^a$) Dt1 Dm1 D6 8 पश्यन् (for पश्चात्) —For 16$^{ef}$–18 Ś1 Ñ V B D1–3 5 7 subst. while Dm1 D5 G3 ins. only l. 1–2 after 17 whereas M2 3 in l. 1–2 only after 16$^{cd}$

347* अभिपत्य ततो वेगाच्चिक्षिपुस्ते निशाचराः ।
परिघान्पट्टिशान्प्रासांश्चतुर्दश चतुर्दश ।
चतुर्दशभिरेकोऽपि राघवो निशितैः शरैः ।
शस्त्राण्यथैषां रक्षोभ्यश्चिच्छेद रणपण्डितः ।
ततोऽपरान्महाघोरांस्त्रयघ्नो रघुविक्रमः । [5]

[(l. 1) D3 वेगाच्च (for वेगाच्च) Ñ2 V B D5 7 M2 अभिद्रुत्य च(Ñ2 D5 7 तु) वेगेन (for the prior half) —Ñ1 om l. 2 —(l. 2) Dm1 D5 G3 शूलान् (for प्रासांश्) M2 निशिताहेमभूषितान् (for the post. half) Ñ• V B D5 7 M2 चतुर्दश सुसंरब्धा(M2 °ब्धाः) शूलपट्टिशमुद्गरान् (M2 °मुद्गर पश्यान्) —After l. 2, Ñ• V B D5 7 ins.

347(A)* तानि सर्वाणि चिक्षेपू राक्षसास्ते चतुर्दश ।,

while Dm1 D5 G3 ins.

347(B)* नाराचैस्तं चिच्छेद प्रकाण्डं कार्मुकात् ।
चतुर्दशभिरत्युग्रैः शरैः काञ्चनभूषितैः ।

(l. 1) D5 इन (for तान्) —(l. 2) G3 काञ्चनभूषितैः]

—(l. 3) Ñ1 D1 3 एकस्तु (D1 °स्तं) Ñ2 V B D5 7 एवाक्षी, D• एवास्य (for एकोऽपि) Ñ• V B D5 7 तान्यच्छिन्नद् सायकैः (for the post. half) —Ñ2 V B D5 7 om l. 4 —(l. 4) D1 तानि (for [अ]थैषां) Ñ1 D3 रक्षोभिस् (for °भ्यश्) D3 चिच्छिदे (for चिच्छेद) —(l. 5) Ñ V B D5 7 अ(V1 त)पराो, D1 महाघोरान् (for महाघोरान्)]

—$^c$) Ñ2 V B D5 7 समरे (for परम) —$^d$) Ś1 Ñ1 D1–3 शिलाशितान्, Ñ• V B D5 M1 शितान्मुखान्, T3 G1 शराञ्शितान्, Cr m g k t as in text (for शिलाशितान्)

19 $^a$) M• सधाय (for गृहीत्वा) Ś1 Ñ1 D1 3 उद्यम्य (for आयम्य) Ñ2 D5 7 सधाय चापि चापे तान्, V B सधाय चापे(B2 °पि) तानाशु, D3 गृहीतधनुरायम्य —$^b$) Ñ• V• B D5 7 लक्ष्यम्, D1 3 लक्ष्याणि, G3 M लक्षान् (for लक्ष्यान्) —After 19$^{ab}$ M2 ins.

348* कृत्वा मुष्टिं धनुर्मध्ये चतुर्दश शिलीमुखान् ।

—D5 reads 19$^{cd}$ in marg —$^c$) M3 मुमोच कौसल्या रामो —$^d$) Ś1 Ñ2 D1-3 M1 3 वज्राणीव (for वज्रानिव) Ñ2 V B D5 7 M2 वज्राशनिसमस्वनान् —After 19 D1 3 read 349*

20 Dt1 D6 8 om 20$^{ab}$ Ś1 Ñ1 read 20$^{ab}$ after 349* —$^a$) Ś1 Ñ V B D1–3 5 7 G1 M3 ते रुक्मपुङ्खा (for रुक्मपुङ्खाश्च) Ś1 Ñ1 D1-3 विशिखा (for विशिखा) —$^b$) Ś1 Ñ V B Dg1 D2 5 7 G1 2 M1 हेमभूषिता (for °षणा) T1 2 M3 दीप्ता हेमविभूषिता —Dm1 D5 read 20$^{cd}$ after 16$^{ab}$ —$^d$) Ś1 तुमुलस्वना, Ñ1 D3 °निस्वना, Dm1 D5 M3 °दर्शना, D1 °लक्षणा D2 °भूषणा, G1 °विक्रमा (for तुल्यवर्चस)

21 $^{ab}$) D6 G1 राक्षसान् (for रक्षसां) Dt1 Dm1 D6 °रक्षुता (for °राप्लुता) Ś1 Ñ V B D2 3 5 7 G1 M3 ते

समन्तादभिसंपत्य सिंहव्याघ्रमृगद्विजाः ।
अन्वधावंस्तदा रोषात्सीताच्छायानुगामिनः ॥ ३४

जलप्रपातास्रमुखाः शृङ्गैरुच्छ्रितबाहवः ।
सीतायां ह्रियमाणायां विक्रोशन्तीव पर्वताः ॥ ३५

ह्रियमाणां तु वैदेहीं दृष्ट्वा दीनो दिवाकरः ।
प्रविध्वस्तप्रभः श्रीमानासीत्पाण्डुरमण्डलः ॥ ३६

नास्ति धर्मः कुतः सत्यं नार्जवं नानृशंसता ।
यत्र रामस्य वैदेहीं भार्यां हरति रावणः ॥ ३७

इति सर्वाणि भूतानि गणशः पर्यदेवयन् ।
वित्रस्तका दीनमुखा रुरुदुर्मृगपोतकाः ॥ ३८

उद्वीक्ष्योद्वीक्ष्य नयनैरास्रपाताविलेक्षणाः ।
सुप्रवेपितगात्राश्च बभूवुर्वनदेवताः ॥ ३९

विक्रोशन्तीं दृढं सीतां दृष्ट्वा दुःखं तथागताम् ।
तां तु लक्ष्मण रामेति क्रोशन्तीं मधुरस्वराम् ॥ ४०

अवेक्षमाणां बहुशो वैदेहीं धरणीतलम् ।
स तामाकुलकेशान्तां विप्रमृष्टविशेषकाम् ।
जहारात्मविनाशाय दशग्रीवो मनस्विनीम् ॥ ४१ G 3.58.45 B 3.52.43 L 3.58.40

34 Ñ1 (illeg for 34$^{a}$) transp 34 and 35 —$^{a}$) Dg1 D4 T2 अभिसपत्य, T3 अभिसत्वाशु, G1 अपि निष्पत्य, G3 अभिसपत्य, Cg as in text (for अभिसंपत्य) Ñ2 V1 B1.3.4 D5.7 तथा महावने क्रूरा (V1 B1.3.4 क्रुद्धा), D1 राम माहात्म्यसंयुक्ता —$^{b}$) V1 -व्याघ्र (for व्याघ्र) Ñ2 D6.7 महाद्विपा; B1 D4 मृगद्विपा, D3 M1 मृगा द्विजा (for मृगद्विजाः) —$^{c}$) Ś1 Ñ2 V1 B1 Dg1 D5.7 अन्वधावन्, Cg as in text (for अन्व°) Ñ1 V1 Dg1 Dm1 D3 T1 G3 M3 ततो, D2 तथा, Cg as in text (for तदा) Ñ2 V1 B1.3.4 D5.7 सीता; G3 घोषात् (for रोषात्) —$^{d}$) Ñ2 V1 B1.3.4 D5.7 सर्वे, Dm1 D3.8 T1 M2.3 सीता (for सीता) Ś1 D5 -[अ]नुधाविन, Cg °गामिन (for °गामिनः)

35 Ñ1 transp 34 and 35 —$^{a}$) Ś1 D2 जल प्रवाहपति(D2 °वित)ते, Ñ1 जलस**सुमुखा, Ñ2 V1 B1.3 D5.7 जलप्रपातविहते, B1 जलप्रपातविहते, Dg1 T3 जलप्रवाहाश्रु(T3 °स्र)मुखा, Dm1 जलप्रपाताश्रुमुखा, D1 जलप्रपातसलिले, D3 जलप्रपातविपुले, D4 T2 G2 जल प्रपाताश्रु(G2 °स्र)मुखा; Cm g k t जलप्रपातास्रमुखा (as in text) —$^{b}$) Dg1 Dt1 D4 T1.2 M3 -बाहुभि, T3 -बाहवा, Cg as in text (for -बाहव) —$^{d}$) Ñ1 illeg for पर्वता —After 35, T3 reads 33

36 Ñ1 (illeg for 36$^{a}$) reads 36$^{a}$–38$^{b}$ after 40$^{ab}$ —$^{a}$) Ś1 D1-3 च (for तु) D4 om (hapl) from दीनो in $^{b}$ up to दृष्ट्वा in 40$^{b}$ —$^{b}$) Ñ1 सीता, D2 दीना (for दीनो) V1 निशाकर (for दिवा°) —$^{c}$) Ś1 T प्रविध्वस्तप्रभ, N1 सहसास्तप्रभ, D1 प्रविध्वस्तगति, M3 विध्वसितप्रभ Ñ2 V1 B1.3.4 D5.7 प्रवि(B1 परि)ध्वस्तप्रभाजाल —$^{d}$) D1 सीता (for आसीत्) B1.3.4 Dg1 Dm1 D7 T1.3 G M पाडर (for पाण्डुर)

37 For om of 37 in D4 and sequence in Ñ1 cf. v l 36 —$^{d}$) Ñ V1 B1.3.4 Dt1 Dm1 D5-8 सीता (for भार्यां)

38 For om. of 38 in D4 and sequence in Ñ1 cf. v l 36 —$^{a}$) B3.4 Dg1 Dt1 Dm1 D4.8 T3 भूतानि सर्वाणि (by transp) —$^{b}$) Ś1 N V1 B1.3.4 D2.5.6.7 गणशे, Dm1 गणशः, D1 गणशे, Cr g k t as in text (for गणशः) G1 पर्यदेवयन् (for °देवयन्) —After 38$^{ab}$ Ś1 Ñ1 D1 ins, while Ñ2 V1 B1.3.4 D5.7 subst for 40$^{ab}$

1003* दृष्ट्वा सीतां परामृष्टां रावणेन यशस्विनीम् ।
[ Ś1 D1 तपस्विनीं (for यश°) ]

—Ñ2 V1 B1.3.4 D5.7 om 38$^{c}$–39 —$^{c}$) T3 वित्रस्तास्ते, G2 वित्रस्तागा, M1 वित्रस्तका, M3 वित्रस्तया, Cg as in text (for वित्रस्तका) M2 **सया (damaged) (for दीन मुखा) Ś1 D1-3 त्रस्तका दीनमुखका, Ñ1 त्रस्ता वै दीनवदना, Dg1 T3 वित्रस्ता दीनवदना —$^{d}$) Ś1 Ñ1 D1-3 उन्मुखा (for रुरुदु)

39 D4 om 39 (cf v l 36) Ñ2 V1 B1.3.4 D5.6.7 om 39 (for all except D6 cf v l 38) Dg1 om 39$^{ab}$ —$^{a}$) Ñ1 उद्वीक्ष्य ता बभूवांसं —$^{b}$) Ś1 Ñ1 Dm1 D1.3 अश्रु, T1 त्रास, T3 अग्र (for आस्र) T3 G1 M2 [इ]क्षणे (for -[इ]क्षणा) Dt1 D1 सवाष्पविलक्षणे —$^{c}$) Ś1 Ñ1 D1.2 सम्प्रवेपित (for सुप्र°) —$^{d}$) G1 वरदेवता (for वन°)

40 D4 om up to दृष्ट्वा in $^{b}$ (cf v l 36) —$^{a}$) Ś1 D2 भृशं, M3 तु ता (for दृढं) —$^{b}$) Ñ1 D1 T1 दुःखात् (for दुःखं) Dg1 G1 तदागता, D2 यथागता G1 दृष्ट्वा दुःख समागता —For 40$^{ab}$, Ñ2 V1 B1.3.4 D5.6.7 subst 1003* —After 40$^{ab}$ Ñ1 reads 36$^{a}$–38$^{b}$ —Ś1 D1-3 om 40$^{c}$–41$^{b}$ —$^{c}$) Ñ1 हा (for तु) Ñ2 V1 B1.3.4 D5 हा लक्ष्मणेति (for तां तु लक्ष्मण) D7 हा राम हा लक्ष्मणेति —$^{d}$) Ñ2 D5.7 मधुरस्वना(D5 °न), T1.2 G2 M2 मधुरस्वर, G(ed) मधुराक्षर (for °स्वराम्)

41 Ś1 D1-3 om 41$^{ab}$ (cf v l 40) —$^{ab}$) V1 Dg1 D5.6 M3 अवेक्ष्यमाणा(D5 °णो), B1 अवेक्षमाणा, Dm1 व्यवेक्ष्यमाणा, Cm g t as in text (for अवेक्ष°) Ñ2 V1 B1.3.4 D5.7 वैदेही बहुशो(by transp) D7 धरणीतले (for °तलम्) —Ñ1 om 41$^{cd}$ —$^{c}$) Ś1 D2 सताम्, B3 (after corr see m) D1.2.4 G2.3 सीताम् (for स ताम्).

G 3.58.32 B 3.52.29 L 3.58.37

चरणान्नूपुरं भ्रष्टं वैदेह्या रत्नभूषितम् ।
विद्युन्मण्डलसंकाशं पपात मधुरस्वनम् ॥ २७
तरुणप्रवालरक्ता सा नीलाङ्गं राक्षसेश्वरम् ।
प्राशोभयत वैदेही गजं कक्ष्येव काञ्चनी ॥ २८
तां महोल्कामिवाकाशे दीप्यमानां स्वतेजसा ।
जहाराकाशमाविश्य सीतां वैश्रवणानुजः ॥ २९
तस्यास्तान्यग्निवर्णानि भूषणानि महीतले ।
सघोषाण्यवकीर्यन्त क्षीणास्तारा इवाम्बरात् ॥ ३०
तस्याः स्तनान्तराद्भ्रष्टो हारस्ताराधिपद्युतिः ।
वैदेह्या निपतन्भाति गङ्गेव गगनाच्युता ॥ ३१
उत्पातवाताभिहता नानाद्विजगणायुताः ।
मा भैरिति विधूताग्रा व्याजह्रुरिव पादपाः ॥ ३२
नलिन्यो ध्वस्तकमलास्त्रस्तमीनजलेचराः ।
सखीमिव गतोत्साहां शोचन्तीव स्म मैथिलीम् ॥ ३३

1006* भूषणैर्विविधैः सा तु राक्षसेन्द्रमशोभयत् ।

—D2 om. (hapl. ?) 26$^{c}$–29. —$^{c}$) D7 om., M3 वितता (for विमला) —$^{d}$) D1 गिरिम् (for नगम्) Ñ2 [उ]ज्ज्वल, D4 [उ]त्तर; T1 G1 M3 [उ]ज्ज्व (for [उ]त्तमम्). V1 B1.3.4 D5.7 रक्षो मेरुमिवोज्ज्वल (B1 °ला), Dm1 D6 G2 मेरुश्रृङ्गमिवोत्तम (G3 °मत)

27 D3 om. 27 (cf. v. l. 26). Ś1 reads 27 after 30. —$^{a}$) Dg1 घेइ (for भ्रष्ट) —$^{b}$) Ś1 Ñ2 V1 B1.3.4 D1.5.6.7 पादक्षेपतः; Ñ1 धरणीतले, D4 मणि° (for रत्न भूषितम्) —D5 om. 27$^{c}$–28$^{b}$. —$^{c}$) Ś1 D1.3 वलय (for मण्डल-) V1 वर्णाभं (for संकाशं) —$^{d}$) Ñ1 Dm1 D1.3 G M मधुरस्वर, Ñ2 V1 B1.3.4 Dt1 D6.7 T2 धरणीतले (for मधुरस्वनम्)

28 D3 om. 28 (cf. v. l. 26). Ñ1 D5 om. 28$^{ab}$ (for D5, cf. v. l. 27). Ś1 reads 28 (including 1006*) after 26$^{ab}$. Dg1 Cm g read 28 after 22. —$^{a}$) Ś1 D1.3 सनु(D1.3 °र)पल्लवरक्ता, Dg1 °रक्ता; Cm g t as in text (for तरुणप्रवालरक्ता) ॐ Cm तरुणप्रवालरक्तेति पाठे प्रवालसदृशरक्ता ॐ Ñ2 V1 B1.3.4 D3 निष्टप्तकनका(Ñ2 B1 °काञ्चना)भासा, M3 तरुणप्रवालरक्ताभा —$^{b}$) Ñ2 V1 B1.3.4 D6.7 G1 राक्षसाधिप (for °सेश्वरम्) —$^{c}$) V1 B1.4 D1.3.4.7 अशोभयत, B1 शोभयामास, Dm1 D6 T1 प्रशो°, M3 प्राशोभत च (for प्राशोभयत) Ñ1 हेमप्रवरवच्छोभा. —$^{d}$) V1 गजकक्षेव; Dg1 D1.5–7 गज कक्षेव; Cg as in text. —For 28$^{cd}$, Ś1 subst. 1006*.

29 Ś1 D3 om. 29 (for D3, cf. v. l. 26) —$^{a}$) D3 एकोल्काम —$^{b}$) B1.4 ज्वलमानां (for दीप्य°). —$^{c}$) Dm1 D6 M3 जगाम (for जहार) M1 भाद्राय (for भाविश्य).

30 B1 reads 30$^{ab}$ twice —$^{a}$) M2 [अ]ग्निवर्णानि (for [अ]ग्नि°) —$^{c}$) B1 सुघोषाणि, Dg1 सघोषेण (for सघोषाणि). Ñ V1 B1.3.4 D5.7 व्यशीर्यन्त, Dt1 D6 G2 [अ]वशीर्यन्त; D2 [अ]वकीर्यन्ते, M1 (after corr. as in text) [अ]वतीर्यन्त (for [अ]वकीर्यन्त). G(ed.) सघोषाण्यवकीर्यन्त. —$^{d}$) G1 क्षुण्णास् (for क्षीणास्). Ś1 उल्का भ्रष्टा. Ñ1 तारा क्षीणा (by transp.) (for क्षीणास्तारा). D1 [अं]बुदात् (for [अ]म्बरात्). —After 30, Ś1 reads 27.

31 $^{a}$) M2 स्तनान्तर- (for °राद्). —For 31$^{cd}$, Ś1 Ñ V1 B1.3.4 D1–3.5.7 subst.:

1007* विशीर्णः पाण्डुरः श्रीमांस्तस्या हारः स्तनान्तरात् ।

[ B1 स शीर्णः (for विशीर्णः). Ñ V1 B1.3.4 D1 पांडुर (for पाण्डुर). V1 यस्या (for तस्या) ]

—Ñ1 partly illeg. for 31$^{cd}$. —$^{c}$) Ś1 Dg1 D3 न्यपतद् (Dg1 °तन्), B1 निरत (for निपतन्). Ś1 D3 मा वै (for भाति) —$^{d}$) Ñ2 V1 B1.3.4 D6.7 नभस्तलात् (for गगनाच्). Dt1 Dm1 D4.6 T3 G1.3 गगनच्युता, Ś1 दिवि गङ्गेव भूतले, D1–3 दिवो गङ्गेव भूतलं (D2 °ले).

32 $^{a}$) Ñ2 V1 B1.3.4 D6.7 ततस्तु, K(ed.) उत्पत (for उत्पात) —$^{b}$) Ś1 D1.3 भ्राता (D1.3 °ता) द्विजगणाकुलाः, Ñ2 V1 B1.3.4 D5.6.7 नानाद्विजनादाढ्य (B1.3 °द्व, D5.7 °ह्व)ता; G(ed.) नानाद्विजकुलाकुला. —$^{c}$) Ñ1 B1 भैषीति (for भैरिति). D2 विधूताग्रा, D3 T1 विधूतान्या (for °ताग्रा). V1 B1.4 D6.7 T3 मा भैषीरिति धूता (V1 D6 °मा )ग्रा. —$^{d}$) B1 व्याचक्रुर् (for व्याजह्रुर्). V1 इति (for इव)

33 T3 reads 33 after 35. —$^{a}$) V1 शात; B1.4 ध्वस्त, B3 (sup. lin. as in text) Dt1 D4 T1.2 स्रस्त, D6.7 ह्रस्त; T3 ध्वस्त; M3 ग्रस्त, Cg.k.t as in text (for ध्वस्त-). Ñ1 जलाशयाः (for -जलेचराः). —$^{c}$) Ś1 D1–3 विरुच्छ्वासा; Ñ1 illeg., Dg1 Dm1 D3 G1 M1.2 Cr.m g गतोच्छ्वासाः; D3 जलोच्छ्वासाः; T2 G3 M3 गतोच्छ्वासा (M3 °सात्); T3 G1 गतोत्साहा. Ct as in text (for गतोत्साहां). ॐ Ck: गतोच्छ्वासा गतप्राणा ।. Ct 'गतोच्छ्वासा.' इति पाठे रावणत्रासादुच्छ्वसनरहितया गतप्राणा इत्यर्थः. ॐ Ñ2 V1 B1.3.4 D6.7 वयस्या इव चोद्वाष्पा (V1 सोद्वाष्पा; B1 चाश्रुष्पा). —$^{d}$) Dm1 D6 [इ]ह, Cm g t as in text (for [इ]व). D3 हि, D4 om. (subm.), T2 च (for स्म). Ñ1 प्रायेण च; T1 मन्दशोषिता; G1.3 शोचति स्म च (G3 हि) (for शोचन्तीव स्म). Ñ2 V1 B1.3.4 D6.7 शोचति (V1 °ते) जनकात्मजां.

समन्तादभिसंपत्य सिंहव्याघ्रमृगद्विजाः ।
अन्वधावंस्तदा रोषात्सीतां छायानुगामिनः ॥ ३४

जलप्रपातास्रमुखाः शृङ्गैरुच्छ्रितबाहवः ।
सीतायां ह्रियमाणायां विक्रोशन्तीव पर्वताः ॥ ३५

ह्रियमाणां तु वैदेहीं दृष्ट्वा दीनो दिवाकरः ।
प्रविध्वस्तप्रभः श्रीमानासीत्पाण्डुरमण्डलः ॥ ३६

नास्ति धर्मः कुतः सत्यं नार्जवं नानृशंसता ।
यत्र रामस्य वैदेहीं भार्यां हरति रावणः ॥ ३७

इति सर्वाणि भूतानि गणशः पर्यदेवयन् ।
वित्रस्तका दीनमुखा रुरुदुर्मृगपोतकाः ॥ ३८

उद्वीक्ष्योद्वीक्ष्य नयनैरास्रपाताविलेक्षणाः ।
सुप्रवेपितगात्राश्च बभूवुर्वनदेवताः ॥ ३९

विक्रोशन्तीं दृढं सीतां दृष्ट्वा दुःखं तथा गताम् ।
तां तु लक्ष्मण रामेति क्रोशन्तीं मधुरस्वराम् ॥ ४०

अवेक्षमाणां बहुशो वैदेहीं धरणीतलम् ।
स तामाकुलकेशान्तां विप्रमृष्टविशेषकाम् ।
जहारात्मविनाशाय दशग्रीवो मनस्विनीम् ॥ ४१ G 3. 58. 45 B 3. 52. 43 L 3. 58. 40

---

34 Ñ1 (illeg for 34ᵃ) transp 34 and 35 —ᵃ) Dg1 D4 T2 अभिसंपत्य, T3 अभिसत्याशु, G1 अपि निष्पत्य, G2 अधिसंपत्य, Cg as in text (for अभिसंपत्य) Ñ2 V2 B1.2.4 D5.7 तथा महावने क्रूरा (V2 B1.2.4 क्रुद्धा) D1 राम माहात्म्यसंयुक्ता —ᵇ) V1 -व्याघ्रा (for -व्याघ्र) Ñ2 D5.7 महाद्विपा, B1 D4 -मृगद्विपा, D6 M3 -मृगा द्विजा (for मृगद्विजा) —ᶜ) Ś1 Ñ2 V1 B3 Dg1 D5.7 अन्वधावन्, Cg as in text (for अन्व°) Ñ2 V1 Dg1 Dm1 D6 T1 G1 M3 ततो, D2 यथा, Cg as in text (for तदा) Ñ2 V1 B1.2.4 D5.7 सीता, G2 घोषात् (for रोषात्) —ᵈ) Ñ2 V1 B1.2.4 D5.7 सर्वे, Dm1 D4.5.8 T1 M1.2 सीता (for सीतां) Ś1 D1 [अ]नुयायिन, Cg °सारिण (for °गामिन)

35 Ñ1 transp 34 and 35 —ᵃ) Ś1 D1 जल प्रवाहपति(D1 °तित)वि, Ñ2 जलप्र*सुप्रमुखा, Ñ2 V2 B1.4 D5.7 जलप्रपातविहले B1 जलप्रपातविवर्त Dg1 T2 जलप्रवाहा[स्र](T3 °स्र)मुखा, Dm1 जलप्रपाताश्रुमुखा, D1 जलप्रपातसलिले, D1 जलप्रपातविपुले, D6 T2 G1 जल प्रपाताश्रु(G2 °श्रु)मुखा, Cm g k.t जलप्रपातास्रमुखा (as in text) —ᵇ) Dg1 D11 D6 T1.3 M3 -बाहुभि, T3 -पादपा, Cg as in text (for -बाहव) —ᵈ) Ñ1 illeg for पर्वता —After 35 T3 reads 33

36 Ñ1(illeg for 36ᵃ) reads 36ᵃ-38ᵇ after 40ᵃᵇ —ᵃ) Ś1 D1-3 च (for तु) D6 om (hapl ) from दीनो in ᵇ up to दृष्ट्वा in 40ᵇ —ᵇ) Ñ1 सीता, D3 दृष्ट्वा (for दीनो) V2 निशाकर (for दिवा°) —ᶜ) Ś1 T प्रविध्वस्तप्रभ, Ñ1 सहसास्तप्रभ D1 प्रविध्वस्तगति M3 विध्वंसितप्रभ Ñ2 V1 B1.2.4 D5.7 प्रति(B1 परि)ध्वस्तप्रभाजाल —ᵈ) D1 सीता (for आसीत्) B1.2.4 Dg1 Dm1 D7 T1.2 G M पाण्डर (for पाण्डुर)

37 For om of 37 in D6 and sequence in Ñ1 cf v l 36 —ᵈ) Ñ V2 B1.2.4 D11 Dm1 D5-8 सीता (for भार्यां)

38 For om of 38 in D6 and sequence in Ñ1 cf v l 36 —ᵃ) B1.4 Dg1 D11 Dm1 D4.5 T3 भूतानि सर्वाणि (by transp ) —ᵇ) Ś1 Ñ V1 B1.2.4 D2.3.5.7 गणशो Dm1 गणश, D1 गमन, Cr g k t as in text (for गणश ) G2 पर्यवदयन् (for °देवयन्) —After 38ᵃᵇ Ś1 Ñ1 D1.3 ins while Ñ2 V1 B1.2.4 D5.7 subst for 40ᵃᵇ

1008* दृष्ट्वा सीता परामृष्टा रावणेन यशस्विनीम् ।
[ Ś1 D1.3 तपस्विनी (for यश°) ]

—Ñ2 V1 B1.2.4 D5.7 om 38ᶜ-39 —ᶜ) T2 वित्रस्तास्त G2 वित्रस्तांगा, M1 वित्रस्तका M2 वित्रस्तया, Cg as in text (for वित्रस्तका) M3 ** का (damaged) (for दीन मुखा) Ś1 D1-3 त्रस्तका दानमुखका, Ñ1 त्रस्ता वै दीनवदना, Dg1 T3 वित्रस्ता दीनवदना —ᵈ) Ś1 Ñ1 D1.3 दुन्मुखा (for रुरुदुर्)

39 D6 om 39 (cf v l 36) Ñ2 V1 B1.2.4 D5.7 om 39 (for all except D6 cf v l 38) Dg1 om 39ᵃᵇ —ᵃ) Ñ1 उद्वीक्ष्य वा बहुशस्ता —ᵇ) Ś1 Ñ1 Dm1 D1.2.3 नयनैर्, T1 भास, T2 अस्र (for आस्र) T3 G1 M3 -[ई]क्षणे (for -[ई]क्षणा) D11 D6 नयनादिव विक्लवाः —ᶜ) Ś1 Ñ1 D1.3 समवेपित (for सुप्र°) —ᵈ) G1 वरदेवता (for वन°)

40 D6 om up to दृष्ट्वा in ᵇ (cf v l 36) —ᵃ) Ś1 D1 भृशं, M3 तु वा (for दृढं) —ᵇ) V1 D1 T2 दुःखात् (for दुःखं) Dg1 G3 तदागताम्, D1 यथागतां G1 दृष्ट्वा दुःख समागता —For 40ᵃᵇ Ñ2 V1 B1.2.4 D5.7 subst 1008* —After 40ᵃᵇ Ñ1 reads 36ᵃ 38ᵇ —Ś1 D1-3 om 40ᶜ 41ᵇ —ᶜ) Ñ1 हा (for तु) Ñ1 V1 B1.2.4 D4 हा लक्ष्मणेति (for तां तु लक्ष्मण) D7 हा रामे हा लक्ष्मणेति —ᵈ) Ñ1 D5.7 मधुरस्वना(D6 °न) T1.2 G2 M1 मधुरस्वर, G(ed ) मधुराक्षर (for °स्वराम्)

41 Ś1 D1.3 om 41ᵃᵇ (cf v l 40) —ᵃᵇ) V1 Dg1 D4.5 M1 अवेक्ष्यमाणा(D6 °णो), B1 आवेक्ष्यमाणा, Dm1 आवेक्ष्यमाणा, Cm g t as in text (for अवेक्ष°) Ñ2 V1 B1.2.4 D5.7 वैदेही बहुशो (by transp ) D1 धरणीतले (for °तलम्) —Ñ1 om 41ᶜᵈ —ᶜ) Ś1 D4 सतां च, B2 (after corr sec m ) D1.2.4 G1.2 सीतां (for स ताम्)

C 3 58 46
B 3 52 44
L 3 58 41

ततस्तु सा चारुदती शुचिस्मिता
विनाकृता बन्धुजनेन मैथिली ।
अपश्यती राघवलक्ष्मणावुभौ
विवर्णवक्त्रा भयभारपीडिता ॥ ४२

इति श्रीरामायणे अरण्यकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

## ५१

समुत्पतन्तं तं दृष्ट्वा मैथिली जनकात्मजा ।
दुःखिता परमोद्विग्ना भये महति वर्तिनी ॥ १
रोषरोदनताम्राक्षी भीमाक्षं राक्षसाधिपम् ।
रुदती करुणं सीता ह्रियमाणेदमब्रवीत् ॥ २
न व्यपत्रपसे नीच कर्मणानेन रावण ।
ज्ञात्वा विरहितां यो मां चोरयित्वा पलायसे ॥ ३

—[d] ) Ñ2 D8.7 प्रविलुप्त, V2 B2.3.4 D2 विप्रण(D2 °ष्ट)ष्ट (for विप्रणष्ट) Ś1 D3 शिरोरुहा (for विशेषकाम्) —After 41[cd] Ñ2 B2.3.4 D8.7 ins

1009* वरप्रदानसंपन्नो बलवीर्यमदेन च ।

—[f] ) Ñ2 महाबल, Dg1 T2 G2 यशस्विनीं G1 तपस्विनीं, Cg as in text (for मनस्विनीम्) Ñ2 D8.7 वैदेहीं तु तपस्विनीं

42 Ñ1 partly illeg for [a] —[a] ) V1 च (for तु) G(ed) वै रुदती (for चारुदती) Ś1 Ñ2 V3 D2.3.6.7 G2 सीता रुदती (for सा चारुदती) Ś1 D1.2 स्वयंविकपट्, D6.7 सुविस्मिता (for शुचि°) —[c] ) B3.4 G2 लक्ष्मणराघवाद् (by transp) —[d] ) G2 विवर्णवर्णा Ñ2 V1 B3.4 D8.7 भयमोह मूर्छिता, B2 भयमोहशङ्किता (for भयभारपीडिता)

Colophon —*Sarga name* Ś1 D3 सीताप्रलाप, Ñ1 D1.3 सीताहरण, Ñ2 D6.7 रावणप्रयाण, V3 B3.4 सीताहरणे रावणप्रयाण (V1 B1 °प्रयाण) B2 रावणप्रतिप्रयाण —*Sarga no* (figures words or both) Ś1 Ñ1 B1.3 D3 om Ñ2 D6.7 58 V1 57 B4 D5 59 Dg1 Dt1 Dm1 D4.8 T G M1.2 52 D1 55 D2 54 M3 53 —After colophon, G1.2 conclude with श्रीरामाय नम

## 51

D8 begins with ॐ, T1 with श्रीराम शरणं मम, श्रीरामचन्द्राय नम, M1 with श्रीरामाय नम

1 V2 illeg up to 4[b] (cf v l 3 46 7) —[a]) Ñ2 B2 दृष्ट्वा त (by transp) B1 M3 दृष्ट्वा तु, B4 lacuna (for तं दृष्ट्वा) Ñ1 नभस्तलगत दृष्ट्वा —[b]) V1 रावणं, M2 वैदेही (for मैथिली) —[d]) Ś1 T2.3 वर्तते, D1 वर्तती, M2 मैथिली (for वर्तिनी) ※ Cm k t वर्तिनीत्यप्युपपत्ति विनिरार्थं ※ Ñ V1 B2.3.4 D6.7 वर्तमाना (V1 °र्वमाला [sic]) महाभय —After 1, Ś1 D1-3 ins

1010* वेपमाना चलत्काया पूर्णचन्द्रनिभानना ।
व्यसनस्यात्मनो नान्त पश्यन्ती वरवर्णिनी ।
विहायसा नीयमाना रुदन्ती करुणं वनात् ।
अचिन्त्यदुःखशोका दु खे महति वर्तती ।
कथं ज्ञास्यति मे भर्ता लक्ष्मणो वा महाबल । [5]
रावणस्य वशं प्राप्ता मिथिलाधिपतेः सुता ।
रुरोद करुणं बाला विललापातिदु खिता ।

[(l 1) Ś1 बलाच्छाया (for चलत्काया) D3 शुभानना —(l 3) D2 करुण महत्, D3 करुणविरा (for °णं वनात्) —(l 4) Ś1 वर्तते, D3 वर्तिनी (for वर्तती) —(l 5) D1 यास्यति (for ज्ञास्यति) —(l 6) D3 वशे प्राप्ता D3 मैथिलाधिपतेः सुता (for the post half) —(l 7) D1 मु, D1 प (for [अ]ति)],
while Ñ2 V1 B2.3.4 D6.7 ins.

1011* गच्छन्ती साथ वैदेही रावणाङ्के मनस्विनी ।
[V1 च B2 तु (for [अ]थ)]

2 V2 illeg (cf v l 1) —[a]) Ñ1 illeg up to रोदन —[b]) D3 भीमाख्य, D6.7 भीमाक्ष (for °क्षं) Ñ1 तत्र राक्षस, G1 M2 राक्षसेश्वर (for राक्षसाधिपम्) —[c]) Ś1 विक्रुश, D1-3 विक्रुश्य, D4.8 T2.3 G2.3 M1.2 रुदती (for रुदती) Ś1 Ñ2 V1 B1.3.4 D1-3.6.7 रावण, Ñ1 कृपणं, Dm1 करुणा (for °णं) —[d]) Dt1 D5 T तस्य (for [इ]दम्) —After 2, Ś1 D1.2 read 4[cd], V1 reads 5[cd] for the first time repeating it in its proper place —After 2, B3.4 D6.7 (twice) read 5[cd]. —After 2, B1 ins

1012* विक्रुश्य स्वप्रयोगेन दृष्यत राक्षसाधिप ।

3 V2 illeg (cf. v l 1). Ñ1 om 3–4 —[a]) B1 व्यपत्रपसे, B2 D6.7 न त्वपत्रपसे, D8 नान्वपत्रपसे V1 नीत (for नीच) —[b]) B2.4 D4 G1 राक्षस (for रावण) —[c]) Dg1 T2 प्रस्था, T3 भयात् (for ज्ञात्वा) Ś1 D4.8 हि रहित (D1 °तां)

त्वयैव नूनं दुष्टात्मन्भीरुणा हर्तुमिच्छता ।
ममापवाहितो भर्ता मृगरूपेण मायया ।
यो हि मामुद्यतस्त्रातुं सोऽप्ययं विनिपातितः ॥ ४
परमं खलु ते वीर्यं दृश्यते राक्षसाधम ।
विश्राव्य नामधेयं हि युद्धे नास्मि जिता त्वया ॥ ५
ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे ।
स्त्रियाश्च हरणं नीच रहिते च परस्य च ॥ ६

कथयिष्यन्ति लोकेषु पुरुषाः कर्म कुत्सितम् ।
सुनृशंसमधर्मिष्ठं तव शौण्डीर्यमानिनः ॥ ७
धिक्ते शौर्यं च सत्त्वं च यत्त्वया कथितं तदा ।
कुलाक्रोशकरं लोके धिक्ते चारित्रमीदृशम् ॥ ८
किं शक्यं कर्तुमेवं हि यज्जवेनैव धावसि ।
मुहूर्तमपि तिष्ठस्व न जीवन्प्रतियास्यसि ॥ ९

G 3 59 10
B 3 53 10
L 3 59 13

(for विरहितः) T1 यद् (for यो) D1 रामेण रहितं यो मा —d) Dg1 reads पलायसे in marg Ś1 Ñ1 V1 B1 3 4 D1-3 6 1 8(Ś1 Ñ1 D1 2 छ) हास्य हर्तु(Ś1 Ñ1 हन्तु)मिच्छसि (Ś1 D1 °महंसि)

4 V1 illeg for ab (cf v l 1) Ñ2 om 4 (cf v l 3) M3 om 4-5 —a) B1 त्वमेव, G3 (before corr) तवैव (for त्वयैव) M3 ननु (for नून) —b) Ñ1 वचनाद् (for भीरुणा) Ś1 D1-3 पापकर्मणा (for हर्तुमिच्छता) —c) Ñ1 चेवाहतो, D1 [आ]या मोहितो, D6 [अ]व नाहितो (for [अ]पवाहितो) —Ñ1 V B1 3 4 D5 7 om 4ef. Ś1 D1-3 read 4ef after 2 —f) D1 पक्षी (for ऽप्ययं) —After 4 Dg1 Dt1 Dm1 D4 6 8 T G M1 2 ins

1013* गृध्रराज पुराणोऽसौ श्वशुरस्य सखा मम ।

[ Dt1 reads the post half in marg ]

5 M3 om 5 (cf v l 4) V1 repeats 5ab here (cf v l 2) B3 4 D5 7 read (D7 twice) 5ab after 2 —a) D6 खल (for खलु) Ś1 Ñ2 V (V1 second time) B1 3 4 D1 2 6 7 (both times) transp ते and वीर्यं V1 (first time) अपार मनुवीर्यं ते —b) Ś1 Ñ2 V B1 3 4 Dg1 D1-3 5 7 (both times) राक्षसाधिप —c) Ś1 Ñ V B1 3 4 D1-3 5 7 स्व, G (ed ) ते (for हि) —d) Dt1 नास्ति, Cg as in text (for नास्मि) Ñ1 त्वया हृता, M3 स्थिता त्वया, G (ed ) विनिर्जिता (for जिता त्वया) T1 G1 M1 युद्धे नाप(G1 °शि)जितस्त्वया ℞ Cv परममित्यादि । परमं खलु ते वीर्यं दृश्यते यस्य वृद्धो युद्धेऽपजित । युद्धे नास्मि जिता त्वयेति च पाठ । तदानीं युद्धपद सम्बन्धन्तम् ।, Cr k t परम त्वदिति व्यङ्ग्योक्ति ।, Cg परममिति सोल्लुण्ठन वचनम् । अतिनीचमित्यर्थं । तत्र हेतुमाह—विश्राव्येति । हि यस्मात्स्वनाम भयं विश्राव्य अहं रावणोऽस्मीति स्वनाम प्रख्याप्य युद्धे नास्म्यहं जितेति व्यतिरेकोक्ति । यद्वा ते परमं अवीर्यं पक्षीकरण हि यस्माद्युद्धे न जितास्मि ℞ —After 5 Ñ2 V B1 3 4 D6 7 ins

1014* रामस्य सदृशेनैव स्वरेण करुण च यत् ।
विक्रुष्टं त्वत्प्रयोगेऽत्रात्रस्समुद्दयवारन ।

[(l 1) Ñ2 D6 7 स्व, V2 [अ]भि (for [ए]व) —(l 2) B3 तद् (for यद्) ]

6 a) T2 ईदृक्त्वम् Ñ1 कुत्सित (for गर्हितं) —b) Ñ1 कुर्वन् (for कृत्वा) Dg1 transp कथ and कृत्वा —c) Ś1 D1 3 स्त्रियोप (sic), D2 स्त्रियाप (sic) (for स्त्रियाश्च) Ñ1 V2 B1 Dg1 Dt1 D4 8 T G (आ)हरणं, V1 रहितं (for हरणं) Ñ1 पाप (for नीच) —d) Dg1 T2 Cm रहितेन, Ct as in text k (ed ) रहिते तु (for रहिते च) ℞ Cg रहिते स्वामिरहितप्रदेशे ℞ Ñ2 V B1 D6 7 परस्पर, D1 परस्य हि

7 a) Ñ2 D6 7 लोके ते, V B1 3 4 त लोक (for लोकेषु) —b) T2 धर्मं (for कर्म) Ñ2 V B1 3 4 D5 7 जना (Ñ2 D6 7 नरा) कर्म जुगुप्सित —c) D1 6 7 सनृशंसम्, D4 T2 आत्मनो(T2 °ना)र्थम् M3 आनृशंसम् (for सुनृ°) Ñ1 नृशंस वासि पापिष्ठ ℞ Cv सुनृशंसमधर्मिष्ठमिति सम्यक ℞ —d) Ś1 Ñ V B1 D1 7 शौटीरमानिन, B3 4 °मानिन, D1 3 शौण्डीर°, G3 °मानिन ; Cg k as in text Ct शौटीर्य° (for शौण्डीर्यमानिन )

8 a) Ś1 V B1 Dm1 D1-4 8 वीर्यं च, G3 शौण्डीर्यं (for शौर्यं च) Ñ2 D6 7 वीर्यं, V2 Dm1 D5 शौर्यं (for सत्त्व) Ñ2 B3 4 धिक्ते सत्त्व च वीर्यं च —b) B3 transp यद् and त्वया Ś1 Ñ V B3 4 D1-3 5 7 स्वय, Dg1 T2 3 मम (for तदा) Dm1 D4 8 T2 G M यस्त्व(T1 G M1 °स्य) कथितस्त्वया (G3 M1 °था) —c) D4 क्रोशकर (for [आ]क्रो°) M3 कुल नोदस्कर लोक —d) V1 विक्रमम् (for चारित्रम्)

9 ab) D1 T1 G3 M3 transp शक्य and कर्तुम् Ś1 D1 2 पुनह (for एवं हि) Ñ1 किं नु शक्यं मया कर्तुं, T3 M1 किं कर्तुमिह शक्य हि (for a) Dg1 T3 Cm भयेन, Cg as in text (for जवेन) Ś1 D1-3 [अ]सि, Dg1 D4 G1 3 M3 [इ]ह, T2 3 [इ]व, Cg as in text (for [ए]व) Ñ2 V B1 3 4 D6 7 एव त(V कृ)ते नु किं शक्य कर्तुं यस्त्व पलायसे —After 9ab G1 ins

1015* त्वयैव नून दुष्टात्मन्वद्वीर्यं कथित मम ।

—G2 om (hapl ? ) 9cd —c) Ś1 D2 अद्य, Ñ1 चेह, Dg1 D3 उप, D1 द्य, T2 इह, Cg as in text (for अपि) Ñ2 V B1 3 4 Dt1 Dm1 D6-8 Cr k t तिष्ठ त्व, Cm g as in text (for °स्व) —d) D3 G1 प्रतियास्यति

G 3 50 11
B 3 53 11
L 3 50 14

न हि चक्षुःपथं प्राप्य तयोः पार्थिवपुत्रयोः ।
ससैन्योऽपि समर्थस्त्वं मुहूर्तमपि जीवितुम् ॥ १०
न त्वं तयोः शरस्पर्शं सोढुं शक्तः कथंचन ।
वने प्रज्वलितस्येव स्पर्शमग्नेर्विहंगमः ॥ ११
साधु कृत्वात्मनः पथ्यं साधु मां मुञ्च रावण ।
मत्प्रधर्षणरुष्टो हि भ्रात्रा सह पतिर्मम ।
विधास्यति विनाशाय त्वं मां यदि न मुञ्चसि ॥ १२
येन त्वं व्यवसायेन बलान्मां हर्तुमिच्छसि ।
व्यवसायः स ते नीच भविष्यति निरर्थकः ॥ १३
न ह्यहं तमपश्यन्ती भर्तारं विबुधोपमम् ।
उत्सहे शत्रुवशगा प्राणान्धारयितुं चिरम् ॥ १४
न नूनं चात्मनः श्रेयः पथ्यं वा समवेक्षसे ।
मृत्युकाले यथा मर्त्यो विपरीतानि सेवते ॥ १५
मुमूर्षूणां हि सर्वेषां यत्पथ्यं तन्न रोचते ।
पश्यामीव हि कण्ठे त्वां कालपाशावपाशितम् ॥ १६

10 $^{a}$) N1 न त्व, N2 D7 न तु, D6 ननु (*for* न हि) Ś1 Dg1 T3 G2 M3 चक्षुष्पथ —$^{b}$) Ñ2 V B1.3.4 D6.7 तयोः पुरुषसिंहयोः —$^{c}$) Ñ2 D2 ससैन्यो न (*for* °ऽपि) —$^{d}$) V1 मुहूर्तं त्वं न जीवसि

11 Dg1 reads 11 in marg —$^{a}$) Ñ2 V B1.3.4 D5.7 न त्वं शक्तः, Dg1 स त्वं तयोः, T2 सत्यं तयोः, G1 न त्वेतयोः, Cg as in text (*for* न त्वं तयोः) Ñ1 न तयोः शरसंस्पर्शं —$^{b}$) Ñ2 V B1.3.4 D6.7 तयोः सोढुं T2 स्पार्शं शक्तः, G3 शक्तः सोढुं (by transp) (*for* सोढुं शक्तः) —$^{c}$) M [प्र]ज (*for* [ह]व)

12 Ñ V B1.3.4 D1.7 om 12 —$^{a}$) Dg1 T1 M2 Cm (*lp*) कुरु (*for* कृत्वा) D6 पश्यन् (*for* पथ्यं) Ś1 D1-3 मुञ्च मां रावणासाधो —$^{b}$) D2.3 मुञ्चस्व, T2 M3 मां मुञ्च (*for* मां मुञ्च) Ś1 [ऽ]साधो मुञ्चस्व रावण, D1 [ऽ]साधुत्वं च विरावण —After 12$^{ab}$, Ś1 D1-3 M3 ins

1016* बुद्ध्वा सचिन्त्य शनकैर्न क्षस्यति यथा तथा ।

[ M3 तु शनैः (*for* शनकैः) Ś1 निक्षिप त्वं D1 न शाम्यति, D3 विवक्ष्यसि (*for* न क्षस्यति) M3 यथाम तथातथ (*for the* post half) ]

—$^{c}$) Dg1 मत्प्रधर्षेण, M3 तत्प्रधर्षेण, Cg मत्प्रधर्षेण (as in text) Ś1 रुष्टोऽसि, Dt1 D6 -संकुद्धो, D1 दुष्टोऽसि, D2.3 -दुष्टो हि, T3 रुष्टो हि (*for* रुष्टो हि) —$^{d}$) Ś1 D1.3 सह भ्रात्रा (by transp) D2 स भ्राता च —$^{e}$) Ś1 D1-3 विनाश ते (*for* °शाय) T3 विधास्यते विनाश च —$^{f}$) Dm1 D5 मुञ्चस (*for* °सि) Ś1 D3 देशान्ते (D2 °शाते) नो पमोक्ष्यसि (L(ed) °से) D1 सत्त्वेन न विमोक्ष्यसि, D2 न ताभ्यां त्वं विमोक्ष्यसि

13 $^{b}$) D3 T2 M3 मा (*for* मां) N2 B3.4 D6.7 अभिवाञ्छसि, V अभिकाङ्क्षसि B1 बलवान्मामभिकाङ्क्षसि —Dg1 om 13$^{cd}$ —$^{c}$) Dt1 D6 तु (*for* स) Ś1 N V B1.3.4 D1-3.6.7 पाप (*for* नीच) —$^{d}$) Dm1 निरर्थक

14 $^{a}$) M1 नापि (*for* न हि) —$^{b}$) Dm1 D4.8 G1.2 वासवोपमं —Ñ1 reads 14$^{c}$–15$^{b}$, after 16. —$^{c}$) Ñ2 वसेह, D1 नोत्सहेच (*sic*) (*for* उत्सहे) D1 M3 शत्रुवशगान् —$^{d}$) D1 चिरात् (*for* चिरम्) —After 14 Ñ2 V B1.3 (l 2–3 ins after 1018*). D6.7 ins

1017* सत्यो लोकप्रवादोऽयं श्रूयते भुवि राक्षस ।
यदि ते न श्रुतं पूर्वं गुरुभ्यः श्रूयतां मम ।
दीपनिर्वाणगन्धं च सुहृद्वाक्यमरुन्धतीम् ।
न जिघ्रति मुमूर्षुर्यो न शृणोति न पश्यति ।

[ (l 1) Ñ2 illeg B3 देव, B4 सत्य (*for* सत्यो) V राक्षस —(l 2) B3.4 यदि न श्रुतपूर्वोऽसि (B4 °र्वं ते) (*for the* prior half) B3 lacuna G(ed) तरुभ्य॰ (*for* गुरुभ्य॰) —(l 4) D6.7 वै (*for* यो) V2 मुमूर्षुर्न जिघ्रति (*for the* prior half) V1 न जिघ्रति न शृणोति न पश्यति गतायुषः ]

15 B1 om 15 Ñ1 reads 14$^{c}$–15$^{b}$ after 16 —$^{a}$) Ś1 V2 B3.4 D3 नूनं च न, V1 * * पुत्र, Ñ2 D1.7 नूनं त्वम्, V3 नूनं बाल, Dg1 नूनं न च, D3 नूनं चैव, M3 ननु ते च (*for* न नूनं च) —$^{b}$) Dg1 D6 T3 समवेक्ष्यसे, Cg समवेक्षसे (as in text) Ś1 D1.2 सम्प्रेक्षितुमिहे(D1 °तुं यथे)च्छसि, Ñ1 D7 समुपेक्षितुमिच्छसि, Ñ2 V B3.4 D6 समवेक्षितुमिच्छसि, D3 ह्यवेक्षितुमिहार्हसि —V1 om 15$^{cd}$ —$^{c}$) Ñ1 नरा मृत्योर् (*for* यथा मर्त्यो) —$^{d}$) Ñ1 M3 विपरीत(M3 °ते) निषेव(M3 °वि)ते —For 15$^{cd}$ Ñ2 V1 B3.4 D6.7 subst

1018* शूरनाथ सतीमेव यो मां त्वं हर्तुमिच्छसि ।

—Then B3 cont l 2–3 of 1017*

16 D6 reads 16$^{ab}$ in marg —$^{a}$) Dg1 T3 मुमूर्षवो, D1.3 G3 मुमूर्षोणां (*sic*) (*for* °र्षूणां) Ñ Dt1 Dm1 D4.8 T1.2 तु, V1 Dg1 D6 T3 च (*for* हि) Ś1 D1-3 मर्त्यानां, Ñ2 न पथ्य (*for* सर्वेषां) —$^{b}$) N1 रोचते तत्र रावण —$^{c}$) Ś1 [ए]व च, B1 Dm1 D6 G2 M3 [ए]व हि B3 [इ]म हि Dg1 T2 [अ]ह तु, Dt1 [इ]ह हि, D4 च हि T1 G1 [अ]च हि (*for* [इ]व हि) D1 ते कंठे, D3 मर्त्यानां (*for* कण्ठे त्वां) T3 पश्यामि दशकण्ठ त्वा —$^{d}$) Ś1 B3 (*sup lin also*) [अ]वसादित (*for* °पाशितम्) Ñ D6.7 कालपाशेन पाशित, D2 कालपाशैश्च पाशितं —After 16 Ñ1 reads 14$^{c}$–15$^{b}$.

यथा चास्मिन्भयस्थाने न बिभेषि दशानन ।
व्यक्तं हिरण्मयान्हि त्वं संपश्यसि महीरुहान् ॥ १७
नदीं वैतरणीं घोरां रुधिरौघनिवाहिनीम् ।
खड्गपत्रवनं चैव भीमं पश्यसि रावण ॥ १८ ॥
तप्तकाञ्चनपुष्पां च वैदूर्यप्रवरच्छदाम् ।
द्रक्ष्यसे शाल्मलीं तीक्ष्णामायसैः कण्टकैश्चिताम् ॥ १९
न हि त्वमीदृशं कृत्वा तस्यालीकं महात्मनः ।
धारितुं शक्ष्यसि चिरं विषं पीत्वेव निर्घृण ॥ २०
बद्धस्त्वं कालपाशेन दुर्निवारेण रावण ।
क्व गतो लप्स्यसे शर्म भर्तुर्मम महात्मनः ॥ २१
निमेषान्तरमात्रेण विना भ्रातरमाहवे ।
राक्षसा निहता येन सहस्राणि चतुर्दश ॥ २२
स कथं राघवो वीरः सर्वास्त्रकुशलो बली ।
न त्वां हन्याच्छरैस्तीक्ष्णैरिष्टभार्यापहारिणम् ॥ २३
एतच्चान्यच्च परुषं वैदेही रावणाङ्कगा ।
भयशोकसमाविष्टा करुणं विललाप ह ॥ २४ G 3.59.24 B 3.55.25 L 3.59.29

17 a) Ñ1 V2 M1 तथा Ś1 चापि, B2 चास्मिन्, D2 नापि (sic) (for चास्मिन्) D3 जनस्थान (for भय°) —b) Dg1 Dt1 Dm1 D4 5 T3 M1 निशाचर, T2 M2 कद्रावन (for दशानन) D3 दशग्रीव त्रिभपि न —c) Dt1 Dm1 D4 5 transp हि and त्वं Ñ V B1 3 4 D5 7 नून( Ñ1 व्यक्तं ) हिरण्मयान्मोहात्, M3 व्यक्तं हिरण्मयान् त्वं —d) Ñ2 V B1 D3 5 त्वं पश्यसि, B3 4 पश्यसि त्वं T2 सद्द्रक्ष्यसि Ś1 वनेचरान्, V1 महीरुह, D1 वन स्थगान्, D2 वने नगान् (for महीरुहान्)

18 Ñ1 om 18–19 —a) Ś1 D3 5 त्वं हि D1 त्वं वै (for नदीं) Dt1 Dm1 D5 वैतरणीं Ś1 Ñ2 V B1 3 4 D1–3 5 7 मृत्यो (for घोरां) —b) Dg1 T2 3 प्रवाहिनीं, Dt1 D4 5 T1 निवाहिनीं Cg निवाहिनीं (as in text) Ś1 रुधिरापुरमालिनीं, Ñ2 V B1 3 4 D5 7 क्षा( V2 क्षो )-रवाभीरवाहिनीं, D1 नचिरा सुरमालिनीं, D2 रुचिरा सुरमालिनीं, D3 नचिरात्तरत्याहिनीं, L( ed ) रुचिरामूर्मिमालिनीं —cd) Ś1 -वनारूढाम्, V वन त च, B1 3 4 D1 3 वन तथा, G( ed ) -चक्र तत्र, L( ed ) वनारूढाम् ( for -वन चैव ) G2 V3 मही ( for भीम ) Ñ1 B1 4 द्रक्ष्यसि, B2 द्रक्ष्यसि Ś1 D1 5 भीम( Ś1 इमा ) द्रक्ष्य( Ś1 D2 °क्ष्य )सि राक्षस ( for d ) V2 D5 7 असिपत्रवनं यत्तु( Ñ2 °त्व ) नाथ द्रक्ष्यसि रावण

19 Ñ1 om 19 (cf v l 18) —a) D1 तप्ते (sic) G( ed ) प्रभया ( for पुष्पा ) —b) Ś1 Dg1 Dm1 D2–4 G M Cg वैडूर्य ( for वैदूर्य ) Ñ2 D5 7 रचितच्छदा (D5 °दृ), V B3 4 हरितच्छदां( V2 °दृ ) B1 -सुचितच्छदा, D1 3 प्रवरच्छद् G3 प्रवरच्छदीं —c) D1 T1 G M2 3 शाल्मलीं Ñ B3 4 कीर्णां B2 घोरां D3 4 G1 3 M2 तीक्ष्णैर् ( for तीक्ष्णाम् ) Ś1 D1 5 द्र( Ś1 दृ )क्ष्यसे शाल्मलिं तीक्ष्णैर् —d) D2 श्रिता ( for चिताम् ) Ś1 Ñ2 V B1 3 4 D1 3 5 7 तीक्ष्णै( Ś1 D1 3 घोरै )रायसकण्टकैः D2 घोर राक्षसकण्टकैः

20 Ñ V B1 3 4 D5 7 transp 20 and 21 —ab) M2 (after corr sec m as in text) ह (for हि) Dg1 T2 transp कृत्वा and तस्य Ñ2 V B1 3 4 D5 7 दशानन (for महात्मन ) Ñ1 तस्य लोकयशस्विन (for b) —D4 om (hapl) 20c–21 —c) Ñ2 V B1 3 4 D5 7 M2 (also after corr sup lin sec m ) जीवितुं D4 G3 C4 k धारुं, T1 2 G1 2 M1 3 चरतु (for धारितुं) ※ Ct धारतुं धर्तुम् जीवितमिति शेष ※ B1 द्रक्ष्यसि (for शक्ष्यसि) Ś1 D1 5 जीवितुं शक्ष्यस मूढ, Dg1 T2 न चिरं विष्णु वीच —d) V1 [ इ ]ह (for [ इ ]व) Ś1 D1–3 बालिश, Ñ1 सत्वर, Ñ2 V B1 3 4 D5 7 दुर्मते, Dg1 T2 G2 3 M2 3 निघृण

21 D4 om 21 (cf v l 20) Ñ V B1 3 4 D5 7 transp 20 and 21 —a) Ñ2 V1 बद्धस्त्व मृत्युपाश( V1 °रे )ण —b) Ś1 दुर्विषा( L( ed )°षा )येण रावण, Ñ1 V1 कालपाशेन रावण( V1 °क्षस ) D1 3 मृत्युपाशेन रावण —c) Dt1 लप्स्यसे (for लप्स्यसे) —d) Dt1 D4 G1 M1 3 Ct transp भर्तुर् and मम Ś1 D1 3 स्तुत्रामात्मनायत्र

22 a) Ś1 D1–3 निमिष

☞ Ñ1 missing from 3 51 22b up to अभिवाद्य in 3 52 26b on lost folios —b) Ś1 Ñ2 V B1 3 4 D1–3 5 7 T1 M2 विना भ्रात्रा महात्मना( Ś1 D1 3 T1 °वन M2 °हव ) Ct as in text —c) Ś1 D1–3 हतानि रक्षसा येन, Ñ2 V2 B3 4 D5 7 रक्षांसि( V2 B1 3 4 °क्षसा ) निहतान्यार्य, V1 सहस्राणि हतान्यार्य —d) V1 राक्षसाना (for सहस्राणि)

23 a) Dt1 D4 5 T2 G2 M2 transp स and कथं Ś1 Ñ2 Dg1 T2 G1 धीर —c) D4 G2 M1 त्वा (for त्वां) B3 हन्यत (hypm) (for हन्यात्) —d) V B1 3 4 दृष्ट Dm1 D4 G3 दृष्टा (for इष्ट)

24 a) Ñ2 तत्रुक्त्वा स्व D4 एतावदुक्त्वा D1 एवमुक्त्वा च (for °चान्यच्च) Ś1 सतत (for परुषं) —b) Ś1 Ñ2 V B1 3 4 D1 2 5 7 मैथिली (for वैदेही) B1 राक्षमाङ्कगा —c) Ñ2 V B1 3 4 D5 7 दुःख (for भय) —d) D2 रावणं (for करुणं) G2 हा (for ह) —After 24 M2 ins

1019* परस्य बाहुसंस्पर्शं निर्वेण च विनाशनम् ।
विषण्णवदना वीक्ष्य रुरोद जनकात्मजा ।

G 3 59 27
B 3 53 26
L 3 9 30

तथा भृशार्तां बहु चैव भाषिणीं
विलापपूर्वं करुणं च भामिनीम् ।
जहार पापस्तरुणीं विवेष्टतीं
नृपात्मजामागतगात्रवेपथुम् ॥ २५

इति श्रीरामायणे अरण्यकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

## ५२

ह्रियमाणा तु वैदेही कंचिन्नाथमपश्यती ।
ददर्श गिरिशृङ्गस्थान्पञ्च वानरपुंगवान् ॥ १

तेषां मध्ये विशालाक्षी कौशेयं कनकप्रभम् ।
उत्तरीयं वरारोहा शुभान्याभरणानि च ।
मुमोच यदि रामाय शंसेयुरिति मैथिली ॥ २

वस्त्रमुत्सृज्य तन्मध्ये विनिक्षिप्तं सभूषणम् ।
संभ्रमात्तु दशग्रीवस्तत्कर्म न च बुद्धवान् ॥ ३

25 ᵃ) V1 B1 3 Dt1 D1 T2 3 तदा Ś1 D2 भृशं ता (for भृशार्तां) Ś1 Dm1 D1 3 8 G2 बहुरूपभाषिणीं Ñ2 V B1 3 4 D4 7 बहुशस्तदातुरा (D5 °दार्ता) Dg1 D6 T3 बहुधैव भाषिणीं (D4 °षतीं) G1 बहु चैव भाषतीं M1 बहुधैवभाषिणीं —ᵇ) V1 पूर्वां, B1 -पूर्णां (for -पूर्वं) Ś1 B1 D2 G2 करुणं च भाषिणीं Ñ2 V B1 4 D5 7 करुणाभि (B2 °योप) भाषिणीं (V2 °मिनीं) —ᶜ) Dm1 D4 8 T1 3 G M1 Cg करुणा D3 पतितुं M2 3 कृपणा (for तरुणीं) Dg1 Dt1 Dm1 D2 6 8 विचेष्टतीं, D1 T2 G1 च वेष्टतीं (for विवेष्टतीं) Ś1 D1 2 जहार ता पापमतिर्विचेष्टतीं —ᵈ) G3 चाकुल (for आगत) Ś1 D1-3 दु ख, Dg1 T3 रौद्र, Cg as in text (for गात्र) Dt1 D6 G1 -वेपथुं —For 25ᶜᵈ Ñ2 V B1 3 4 D5 7 subst

1020* जहार पाप कृपणा सुदु खिता
विचेष्टमाना स्ववशान्यवेपथुम् ।

Colophon —*Sarga name* Ś1 D2 सीतापमाथ सीता प्रलाप, Ñ V B1 3 4 D1 3 6 7 सीतावाक्य, G(ed ) रावण भर्त्सन —*Sagra no* (figures words or both) Ś1 B1 3 D2 6 om N2 D7 59 V1 58 V2 62 B4 D3 60 Dg1 Dt1 Dm1 D6 8 T G M1 2 53 D1 4 56 M3 54 —After colophon G1 2 conclude with श्रीरामाय नम

### 52

☞ N1 missing from 1 up to अभिवाद्य in 28ᵇ (cf v l 3 51 22) D5 begins with ॐ, T2 with श्रीरामचन्द्राय नम, M1 with श्रीरामाय नम —Before 1, Ñ2 V B1 3 4 D5 7 ins

1021* सम्भ्रान्तश्चैव सहसा प्रगृह्य जनकात्मजाम् ।
जवेन महताविष्ट स प्रयातो नभस्तलम् ।
पूर्वां दिश जनस्थानात्सुवेगेन जगाम स ।
जटायुषा वै निहतो घोरविक्रमशालिना ।
वीक्ष्यमाणो दिश सर्वा नेत्रैरनिमिषैरिव ।
सम्भ्रान्तोऽथ स दिग्मूढ पम्पामभिमुखो ययौ ।
उपर्युपरि पम्पाया ऋष्यमूकं च पर्वतम् ।
जगामादाय रुदतीं मैथिलीं राक्षसेश्वर ।

[(l 1) Ñ2 V D5 7 हृष्टश्च (for सहसा) V1 सहसा (for प्र°) —(l 2) B3 च महाविष्ट (for महता°) V B1 4 च (for स) —(l 4) B3 वैरिभूतो, B3 विनि° D5 7 वै विहि(D7 °ह)तो (for वै निहतो) V B4 -भास्वता (for शालिना) —(l 5) B4 वीक्षमाणो (for वीक्ष्य°) D5 7 अपि (for इव) —(l 6) Ñ2 D5 7 पथि (for पं म) B3 मूढ (for °मूढ) V सम भ्रान्तोथ दिग्मूढ (for the prior half) V2 V अभिमुख (for °मुखो) ]

1 ᵃ) Ñ2 B2 Dg1 Dm1 D5 7 8 [अ]थ, V1 च (for तु) —ᵇ) V1 कथंचित् (hypm) D1 7 किंचित्, D6 T2 कश्चित्, G(ed )कंचित् (for कंचित्) B4 न प (for अपश्यती) —ᵈ) Ś1 तत्र (for पञ्च) N2 D1 7 वानरयूथपान्

2 ᶠ) Ś1 D2 सा हि D1 त हि, L(ed )सा हि (for यदि) Ñ2 V B1 3 4 D5 7 रामस्य (for रामाय) —V2 illeg for 2ᶠ–3ᵇ —ᶠ) B4 समेयुर् (for शंसेयुर्) Ñ2 V1 B1 2 4 D5 7 जानकी (V2 °कीं) Dt1 D6 भामिनी D1 °नीं (for मैथिली) —After 2 Ś1 D1-3 ins

1022* एतां बुद्धिं तदा कृत्वा सीता करतलोदरा ।
[D3 समास्थाय (for तदा कृत्वा) ]

while Ñ2 V2 B1 2 4 D5 7 ins after 2

1023* वसुधासक्तनयना नेत्राम्बु वारि मुञ्चती ।

3 V2 illeg for 3ᵃᵇ (cf v l 2) —ᵃ) G1 उन्मुच्य —ᵇ) M2 विभूषणं, M3 सु° (for स°) Dg1 Dt1 Dm1 D6 8 T1 M1 Cg k t नि(Dt1 वि)क्षिप्य सहभूषणं —For 3ᶜᵈ, Ś1 D1-3 subst and read after 3ᶜᵈ

पिङ्गाक्षास्तां विशालाक्षीं नेत्रैरनिमिषैरिव ।
विक्रोशन्तीं तदा सीतां ददृशुर्वानरर्षभाः ॥ ४
स च पम्पामतिक्रम्य लङ्कामभिमुखः पुरीम् ।
जगाम रुदतीं गृह्य मैथिलीं राक्षसेश्वरः ॥ ५
तां जहार सुसंहृष्टो रावणो मृत्युमात्मनः ।
उत्सङ्गेनेव भुजगीं तीक्ष्णदंष्ट्रां महाविषाम् ॥ ६
वनानि सरितः शैलान्सरांसि च विहायसा ।
स क्षिप्रं समतीयाय शरश्चापादिव च्युतः ॥ ७
तिमिनक्रनिकेतं तु वरुणालयमक्षयम् ।
सरितां शरणं गत्वा समतीयाय सागरम् ॥ ८

G 3 60 18
B 3 54 9
L 3 60 9

---

1024* भूषणानि विधुन्वन्ती तेषां मध्ये वनौकसाम् ।
[ Ś1 विमिञ्चती D1 विचि° (for विधुन्वन्ती) ]

while Ñ2 V1 B2.3.4 D5.7 subst for 3^{cd}

1025* वस्त्रं सभूषणं क्षिप्रं तेषां मध्ये न्यपातयत् ।

—^c) Ś1 Dg1 D1.2 T3 सभ्रमाश्च, Ñ2 D5.7 °भार्तां B2.4 सभ्रातस्तु, Dt1 स भ्रमात्तु, D3 स्वदृष्टाच, M2 स सभ्रमाद् (for सम्भ्रमात्तु) —^d) Dt1 Dm1 D4.6 T1 च न (by transp), T3 न हि, G1 k as in text K(ed) न स (for न च) Ś1 D1-3 वै(D1 *)दही नोपलब्धवान्, Ñ2 V1 B2.3.4 D5.7 सीता नैवाव(V1 नैव वि, D6 नोवाच)बुद्धवान् —After 3 Ñ2 V B1.3.4 D5.7 M2 ins

1026* भूषणानि हि सर्वाणि दिव्य सूक्ष्माणि चिता ।
विधुन्वती वरारोहा तदा वानरसंनिधौ ।

[ (l 1) V1 M2 च (for हि) M3 मुख्यानि (for सर्वाणि) —V3 illeg from दिव्य in the post half up to वि in 4^b M3 पुष्प (for दिव्य) —M3 om l 2 ]

4 V3 illeg for 4^{ab} (cf v l 3) —^a) Ś1 तदस्तेऽपि, Ñ1 V1 B1.4 D1-5.7 °क्षा(D8 °क्षा)स्ते, G2 पिशाक्षिसा (sic) (for पिङ्गाक्षास्तां) —^b) Ś1 B1 D2.3 अपि (for इव) —^c) Ś1 D2 विचे(D3 °चे)ष्टन्ती (for विक्रोशन्तीं) Dg1 Dm1 D4 T1 G3 M1 Cg तथा सीता, D3 lacuna G1 तत्र क्रोशन्ती (for तदा सीतां) —^d) Dt1 D3 वानरोत्तमाः —After 4 Ñ2 V B1.3.4 D5.7 ins

1027* तस्या विक्रोशमानाया वस्त्रं तद्वचसुत्तमम् ।
स्वनश्च त्रिविधाश्छिन्ना पेतुराभरणानि च ।
यानि च कलधौतानि पावकार्चिनिभानि च ।
नक्षत्रविमलाभानि निपेतुर्गिरिसानुषु ।
सम्भ्रमात्तु दशग्रीवो वैदेहीं नोपलब्धवान् । [5]
भूषणानि विधुन्वन्तीं तयोर्मध्ये वनौकसाम् ।
ऋष्यमूकं च दृष्ट्वा स पम्पां चैव निशाचरः ।
उपलक्ष्य दिशं तत्र चकार गमने मतिम् ।

[ (l 1) Ñ2 D1.7 तथा (for तस्या) —V3 illeg from वस्त्र in the post half up to निपेतुर् in the post half of l 4 Ñ2 V1 B1 D5.7 वसनं (for वस्त्रं) B1 वनम् (for वसम्) —(l 3) Ñ2 चैव (hypm) (for च) Ñ2 D5.7 [अ]र्कि (for [अ]र्चि) —(l 5) V2 च (for तु) —V3 illeg from लब्धवान् in the post half up to मध्ये in the post half of l 6 —(l 7) Ñ2 B1 D5.7 तु (for च) B2 त दृष्ट्वा (for दृष्ट्वा स) —(l 8) B1.3 दिशस् (for दिशं) —V3 illeg from तत्र up to मतिम् ]

5 ^a) Ś1 Ñ2 V B2.3.4 Dg1 D5.6.7 T3 तु (for च) Ś1 पञ्चयाम्, M3 (after corr sec m as in text) पुंसाम् (for पम्पाम्) T2 अभिक्रम्य D1.3 स च ता समति(D3 समभि)क्रम्य —^b) Dt1 अभिमुख, D3 °गत, G2 °मत (for अभिमुख) G2 तत (for पुरीम्) —V3 illeg from जगाम in ^c up to तीक्ष्ण in 6^d —^{cd}) Ś1 D2 बाहुना, D1.3 ता तथा (for जगाम) Dm1 D6.8 मैथिली, T1 महती (for रुदती). Ñ2 V1 B2.3.4 D5.7 जगामादाय रुदतीं (for °) Dg1 वैदेहीं, Dm1 D6.8 रुदतीं (for मैथिलीं) Dt1 transp रुदतीं and मैथिलीं Ñ2 B1 D1.6.7 राक्षसाधिप, B3.4 °सोत्तम (for °सेश्वर)

6 V3 illeg up to तीक्ष्ण in 6^d (cf v l 5) —^a) Ś1 D1-3 transp ता and जहार D3 च (for सु) Ś1 तदा सीता, Ñ2 सुसंहृष्टो, D6 सु ** ष्टो (for सुसंहृष्टो) —^b) Ś1 ददृशुर् (sic) D1.3 रूपिणीं (for रावणो) —Ś1 om 6^c-7 —^{cd}) V1 Dt1 Dm1 D7.3.5 T1.3 G1.3 [इ]व (for [ए]व) Ñ2 V1 B1.3.4 D6.7 महादंष्ट्रा, D4 °भीमा (for तीक्ष्ण दंष्ट्रा) G3 M3(after corr sec m as in text) महाभुजा (for °विषाम्) D1.3 उत्सङ्गेनैव(D3 °नेति) भुजगं महादंष्ट्रं महाविषं

7 Ś1 om 7 (cf v l 6) —^a) Dg1 T2 सरांसि (for वनानि) G2 चैव (for शैलान्) —^b) Dg1 T2 वनानि (for सरांसि) —^c) D3 समतीयात्तु (for °याय) Ñ2 V B1.3.4 क्षिप्रं समभि(B1 °ति)चक्राम(V3 °** [illeg]) D1.3 पदस्य स्तूणमतीयाय —V3 illeg from शर in 7^d up to वरुणालय in 8^b —^d) Ñ2 V1 B1.3.4 D1.3.5.7 चापात्शर इव (by transp) —After 7 Ñ2 V1 B1.3.4 D5.7 read 10

8 V3 illeg up to वरुणाल in ^b (cf v l 7) —^a) Ś1 D2 मीननक्राकु(D3 तिमिनक्राकु)लं स तु —V3 illeg from 8^c to l 1 of 1029* —^c) Dm1 D6 G1.3 (after corr sup lin sec m) M3 रम्य D4 नाथ, G2 गृह्य (for शरण) Ś1 D1-3 सरितं समतिक्रम्य, Dg1 T2 सरितां पतिमासाद्य —^d) D3 वानैस्तीर्य सागर —For 8^{cd}, Ñ2 V1 B1.3.4 D1.7 subst

1028* क्षणेनैवातिचक्राम सागरं सरितां पतिम् ।
[ D7 क्षणे चैव V1 [अ]भि (for [अ]ति) ]

G 3 60 19 B 3 54 9 L 3 60 20 संभ्रमात्परिवृत्तोर्मी रुद्धमीनमहोरगः ।
वैदेह्यां ह्रियमाणायां बभूव वरुणालयः ॥ ९
अन्तरिक्षगता वाचः ससृजुश्चारणास्तदा ।
एतदन्तो दशग्रीव इति सिद्धास्तदाब्रुवन् ॥ १०
स तु सीतां विवेष्टन्तीमङ्केनादाय रावणः ।
प्रविवेश पुरीं लङ्कां रूपिणीं मृत्युमात्मनः ॥ ११
सोऽभिगम्य पुरीं लङ्कां सुविभक्तमहापथाम् ।
संरूढकक्ष्यावहुलं स्वमन्तःपुरमाविशत् ॥ १२
तत्र तामसितापाङ्गीं शोकमोहपरायणाम् ।
निदधे रावणः सीतां मयो मायामिवासुरीम् ॥ १३
अब्रवीच्च दशग्रीवः पिशाचीर्घोरदर्शनाः ।
यथा नैनां पुमान्स्त्री वा सीतां पश्यत्यसंमतः ॥ १४
मुक्तामणिसुवर्णानि वस्त्राण्याभरणानि च ।
यद्यदिच्छेत्तदेवास्या देयं मच्छन्दतो यथा ॥ १५

---

9 V3 illeg for 9 (cf v l 8) —a) Ñ2 V1 B1.3.4 D6.1 सधूम (V1 B1.3.4 °म) (for सभ्रमात्) V1 इव वृत्तोर्मि, Dg1 Dt1 Dm1 D1.3.6.3 परिवृत्तोर्मि, D4 M3 °वृद्धोर्मी (for परिवृत्तोर्मी) —b) Ś1 V2 B1.4 D1.2 क्षुब्ध, Ñ2 D3.5.7 क्षुब्ध, G2 कूर्म (for रुद्ध) D2 -महोरग (for °रग) M3 रुद्धमीनमिवोरग —d) B2.4 मकरालय

10 V3 illeg for 10 (cf v l 8) Ñ2 V1 B1.3.4 D5.7 read 10 after 7 —a) B1.3 D7 अंतरीक्षगता —b) Ś1 D1-3 दारुणास् (for चार°) V2 G3 तत, B1 Dg1 Dt1 D4 T2.3 M1.2 तथा (for तदा) —c) L(ed) एतदन्त —d) D6 G2 M1 तथा (for तदा) Ñ2 V1 B1.2.4 D2.3 इति प्रब्रुवन्‌स्तदा, D5 इति सिद्धास्तमब्रुवन् ❀ Cv सिद्धास्तथाऽब्रुवन् । सिद्धाश्च यथाऽब्रुवन् ❀

11 a) Dt1 Dm1 D1-4.5.6 G2 विचेष्टतीम्, M3 प्रवे° (for विवेष्टन्तीम्) —c) Ś1 D2.4 प्रावेशयद् (for प्रविवेश), T2 प्रावेशत तदा लङ्का —d) Ś1 विमको, D1.6 रूपिण (for रूपिणीं) —For 11, Ñ2 V B1.2.4 D6.7 subst

1029* स सागरमतिक्रम्य लङ्कामासाद्य रावण ।
विवेशादाय ता वेश्म सीता मृत्युमिवात्मन ।

[V3 illeg up to l 1 (cf v l 8) —(l 2) B1 G(ed) शीघ्र (for वेश्म) V1 B1 विवेशालयमासाद्य (B1 °द्य) (for the prior half) B4 मृत्युर् (for मृत्युम्)]

12 V3 illeg from तु in 12a up to घों in 14b —a) Ñ2 प्रविश्य च, V B1.2.4 D5.7 स प्रविश्य (V3 °s illeg), D6 सोपि गम्य, T2 सोधि° (for सोऽभिगम्य) Ś1 D2 दिव्यां (for लङ्कां) —b) Ś1 D3 प्रविभक्त, M3 °भक्तां (for सुविभक्त) —Ś1 Ñ2 V1 B1.3.4 D1-3.5.7 om 12c-13b —c) Dg1 कक्षां, T3 -कक्ष्यां (for -कक्ष्या) Dt1 Dm1 (after corr sec m) T1 Ct सरूढकक्ष्या बहुलां (Dm1 [before corr] °लं) Cv g tp as in text

13 V3 illeg for 13 Ś1 Ñ2 V1 B1.3.4 D1.2.5.7 om 13ab (for both, cf v l 12) —a) T1.2 G M1 असितापाङ्गां (for °पाङ्गीं) —b) Dt1 D4 समन्विता, T2 -परायण (for -परायणाम्) —c) Ś1 D1.2 निदध्यौ, B2 Dg1 विदधे, D5 निदेधे, Cg as in text (for निदधे) —d) D1.4 G2 मय (for मयो), B1 मायां मय (by transp) Ś1 [अ]सुरे, Ñ2 V1 B1.3.4 D5.7 [अ]सुर, K(ed) Cg स्त्रिय (for [आ]सुरीम्)

14 V2 illeg up to घों in b (cf v l 12) —a) Ś1 D1.2 अथाब्रवीद्, M1 °त्तु, G(ed) समदिदेश (for अब्रवीच्च) —b) Dt1 पिशाच्या, D1 °च्यो, D4 राक्षसीर् (for पिशाचीर्) —After 14ab, Ñ2 V B1.3.4 D5.7 ins

1030* रक्षणार्थं समाहूय वैदेह्या राक्षसेश्वर ।
कृताञ्जलिपुटा सर्वा सहिता पुरत स्थिता ।

[(l 1) B4 रक्षणाय —(l 2) V3 illeg from पुरत up to मत° in 14d D7 om पुरत]

—c) Dt1 नैना, Dm1 D6 T1.2 G M1.2 Cv g k नेमां, D2 मे न, Cm as in text (for नैनां) G2 पुमान् in marg —d) Ñ2 V1 D1.3.4 D5.7 पश्येत् (for पश्यति) T2 [अ]समत (for °मत) D2 सीतां पश्येत दर्शने —For 14cd, Ś1 D2.3 subst

1031* यथा मा मन्त्रिय तद्वल्लीवा पश्यत समतां ।

[D4 यथा मानस्तु मां स्त्री वा (sic) (for the prior half) and समतां (for °ताम्).]

—After 14 Ñ2 V1 B1.2.4 D5.7 M3 ins.

1032* कश्चित्तथाप्रमत्ताभिर्भवितव्यं सदैव हि ।
तथैव प्रतिपक्षस्यप्रमत्ताभिरेव हि ।

[V1 B1.3 M3 om (hapl) l 1 —B4 reads l 1 in marg —(l 1) B4 मम (for सदा) —(l 2) B1 प्रतिपक्ष (unmetrical) (for प्रति°) M3 तथा भवतो रक्षु यदि मां प्रीतमिच्छथ]

15 a) Ś1 Ñ2 V2 B1.3.4 D1.3.6.7 transp मुक्ता and मणि Ś1 Ñ2 D1.2.5.7 प्रवालानि, D3 विचित्राणि (for -सुवर्णानि) —b) Ś1 Ñ2 V B1.3.4 D1-3.5.7 [अ]जिन(D1 [अ]पि च)वसन —c) Ś1 तत्तदस्यै, Dt2 D1 T1.2 M1 तदेवास्यै D1.3 °स्यै (for तदेवास्या) D2 यद्यदिच्छत्तदेवास्यै —d) L(ed) मच्छन्दतो (for मच्छ°) Ś1 D1.3 [s]पि च (Ś1 वा), Dg1 तथा (for यथा), D3 देय स्वच्छन्दतो हि मे ❀ Cv यद्यदिच्छेत्तदा चास्या देय मच्छन्दतो यथेति पाठः ❀ —For 15cd, Ñ2 V B1.2.4 D5.7 subst.

1033* यद्यदिच्छति वैदेही तद्देय विदित मम ।

[B1.4 विहित (for विदित) B2 यथा (for मम)]

या च वक्ष्यति वैदेही वचनं किंचिदप्रियम् ।
अज्ञानाद्यदि वा ज्ञानान्न तस्या जीवितं प्रियम् ॥ १६
तथोक्त्वा राक्षसीस्तास्तु राक्षसेन्द्रः प्रतापवान् ।
निष्क्रम्यान्तःपुरात्तस्मात्किं कृत्यमिति चिन्तयन् ।
ददर्शाष्टौ महावीर्यान्राक्षसान्पिशिताशनान् ॥ १७
स तान्दृष्ट्वा महावीर्यो वरदानेन मोहितः ।
उवाचैतानिदं वाक्यं प्रशस्य बलवीर्यतः ॥ १८
नानाप्रहरणाः क्षिप्रमितो गच्छत सत्वराः ।
जनस्थानं हतस्थानं भूतपूर्वं खरालयम् ॥ १९
तत्रोष्यतां जनस्थाने शून्ये निहतराक्षसे ।
पौरुषं बलमाश्रित्य त्रासमुत्सृज्य दूरतः ॥ २०
बलं हि सुमहद्यन्मे जनस्थाने निवेशितम् ।
सदूषणखरं युद्धे हतं रामसायकैः ॥ २१
ततः क्रोधो ममापूर्वो धैर्यस्योपरि वर्धते ।
वैरं च सुमहज्जातं रामं प्रति सुदारुणम् ॥ २२
निर्यातयितुमिच्छामि तच्च वैरमहं रिपोः ।
न हि लप्स्याम्यहं निद्रामहत्वा संयुगे रिपुम् ॥ २३ G 3 60 34 B 3 54 24 L 3 60 23

16 a) Ś1 यच् (for या) D1.3 याश्च वक्ष्यति B4 D5.6 T3 वैदेही —G2 om (hapl) 16cd —c) After वा, B4 ins श्रीमद्गुरुचरणात् श्रीमन्मातृचरणे मम भक्तिरस्तु श्रीरामचन्द्र —d) D5 तद् (for न) D1.2 तस्य (for तस्या) G2 भवेत् (for प्रियम्) Ś1 तसोद्रन्य निरत्तर

17 a) D13 तयोक्ता, M3 (after corr inf lin sec m as in text) तयो वा (for तथोक्त्वा) Ś1 D1.2 राक्षसीश्च (D1 °स्तु) तथोक्त्वा स, Ñ2 V B1.3.4 D5.7 तथा स (V1 स तथा [by transp]) राक्षसीस्तस्याः D3 तथोक्त्वा तु राक्षस्यो (subm) —c) Ś1 D1.2 निगम्य (Ś1 °त्य) D4 M4 निष्क्राम्य (for निष्क्रम्य) Ñ2 B1.3.4 D5.7 तस्थौ (for तस्मात्) —d) D1 कार्यमन्य (sic) (for कृत्यमिति) D3 निश्चय (for चिन्तयन्) —After 17cd, N1 V1 B1.3.4 D1.2.5.7 M3 ins

1034* स चिन्तयित्वा सुचिरं रावणो राक्षसेश्वरः ।
[ V1 M3 राक्षसाधिप° ]

—Ś1 om 17ef —V3 illeg from 17a up to 18b —For 17ef, N1 V1 B1.3.4 D1.2.5.7 subst

1035* माजुहाव महावीर्यानष्टौ राक्षसपुंगवान् ।
[ Ñ2 आजहार ]

—After 17 D6 ins राम

18 V3 illeg for 18ab (cf v l 17) —a) Ñ2 V1 B1.3.4 D5.7 श्रीमान् (for दृष्ट्वा) V1 B1.4 D1.2 महावीर्यास्तु (for °वीर्यो) —b) B3 द्रापण, G2 गर्वित (for मोहित) D8 वरदाने समाहित —c) D11 D6 T1 G1 तान्, D4 T2 G2.3 M3.5 [ए]तान् (for [ए]तान्) Ñ2 V B1.3.4 D5.7 उवाच वचनं क्षिप्रं D1 उवाचैतानि तद्वाक्य (sic) —d) V3 illeg D4 वीर्यवान् (for वीर्यतः)

19 V3 illeg from 19 up to निहत in 20b —a) Dg1 T3 शीघ्रम् (for क्षिप्रम्) Ś1 D1.2 नानाप्रहरणोपेता —b) Ś1 D1 क्षिप्रं (for इतो) D1.2 गच्छेद्यु D6 °थ (for गच्छत), Ñ2 V1 B1.3.4 D5.7 राक्षसा —c) Ñ2 reads in marg Dm1 हतस्थान, D6 भूतपूर्वं (for हतस्थान) —d) Ś1 D2.4 भूत पूर्वं, V2 B3.4 °पूर्वे, D1 शून्यभूत (for भूतपूर्वं) D3 खरालय तु राक्षसा

20 V3 illeg up to निहत in 20b (cf v l 19) —a) B1.3 D11 D5 [आ]स्यता (for [उ]ष्यता) —c) B3.4 D3 आस्थाय (for आश्रित्य)

21 Dg1 D4 T2.3 om 21–23 —a) Ñ2 D5.7 च (for हि) V3 illeg from महद् up to in 22b Ś1 बलं च मे यद्बहुरूप, D11 Dm1 D8.9 M3 बहुसैन्यं महा(M3 °हद्)वीर्यं D1.2 बलं मे बहुमूल्यं च D3 बलं च मे बहुरूप, G2 बलं हि सुमहावीर्यं —b) D3 M1 जनस्थान D4 जन्म° (for जनस्थाने) —M3 om 21c–23 —c) N2 V1 B1.3.4 D5.7 सत्ये (for युद्ध) —d) D11 Dm1 D8.9 G2.3 M1 निहत, D3 हते वै (for हत तद्) D1 रामस्य, T1 G1 रामेण (for तद्राम)

22 Dg1 D4 T2.3 M3 om 22 V3 illeg for 22ab (for all, cf v l 21) B3 om 22cd —a) Cr g तत्र (for तत) T1 Cg [अ]मर्षाद्, G1.3 [अ]मषा (for [अ]पूर्व) —b) G1 रामस्य (for धैर्यस्य) T1 G M1 वर्तते (for वर्धते) M3 धैर्येणैव निगूहते —For 22ab Ś1 D1.2 subst

1036* तस्य श्रोधान्महासत्त्व वीर्यं च समवर्धत ।
[ D3 तत्र (for तस्य) and मम (for महा) D1.2 तेष (sic), D3 वैर (for वीर्य) D3 परिवर्धते (for समवर्धत) ]

while Ñ2 V1 B1.3.4 D5.7 subst

1037* तेनापमेय महता समाविष्टस्य राक्षसा ।
[ V1 B1 इतेन तेन N2 D7 समाविष्टस्य V1 मनाश्विष्ट (sic) B4 ममा°, G(ed) मया सुरुष (for समाविष्टस्य) ]
—c) Ñ2 V B1.3.4 D5.7 सजातं सुमहद्वैर

23 Dg1 D4 T2.3 M3 om 23 (cf v l 21) —a) Ś1 निवारयितुम् (for निर्यात°) —b) Ś1 D1.2 तस्य, Dm1 D3 तं च (for तच्च) Ś1 D11 Dm1 D8.9 G1 M1 महा (for अहं) V3 illeg from मह up to 24a Ñ2 V

G 3. 60. 35 B 3. 54. 25 L 3. 60. 24 तं त्विदानीमहं हत्वा खरदूषणघातिनम् ।
रामं शर्मोपलप्स्यामि धनं लब्ध्वेव निर्धनः ॥ २४
जनस्थाने वसद्भिस्तु भवद्भी राममाश्रिता ।
प्रवृत्तिरुपनेतव्या किं करोतीति तत्त्वतः ॥ २५
अप्रमादाच्च गन्तव्यं सर्वरेव निशाचरैः ।
कर्तव्यश्च सदा यत्नो राघवस्य वधं प्रति ॥ २६
युष्माकं हि बलज्ञोऽहं बहुशो रणमूर्धनि ।
अतश्चास्मिञ्जनस्थाने मया यूयं नियोजिताः ॥ २७

ततः प्रियं वाक्यमुपेत्य राक्षसा
महार्थमष्टावभिवाद्य रावणम् ।
विहाय लङ्कां सहिताः प्रतस्थिरे
यतो जनस्थानमलक्ष्यदर्शनाः ॥ २८
ततस्तु सीतामुपलभ्य रावणः
सुसंप्रहृष्टः परिगृह्य मैथिलीम् ।
प्रसज्य रामेण च वैरमुत्तमं
बभूव मोहान्मुदितः स राक्षसः ॥ २९

इति श्रीरामायणे अरण्यकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

B1.3.4 D5.7 वैर तस्य दुरा(V1 B1 महा)त्मन (V2 **** [illeg]) —c) B1.3.4 D5 लप्स्यामहे, Dt2 Dm1 D6 (before corr) G2 M1 पश्या° (for लप्स्याम्यह) V1 वाद लप्स्यामहे निव्रास् (sic) M3 न हि निद्राम्यह रामम् —d) Ñ2 V1 B1.4 D5.7 राघव रणे, B2 राक्षस रणे, M3 समरे रिपु (for सचुगे रिपुम्) —After 23 Ñ2 V1 B1.3.4 D5.7 ins.

1038* तस्माद्वधविनिश्चयकार्यं यथा वध्येत मे रिपु ।

[ Ñ2 D5.7 तथा (for तस्मात्) Ñ2 V1 वा( V1.4 )ध्येत (for वध्येत) ]

24 V2 illeg for 24a (cf v.l 23) —a) D1 G1 तत् D1.2 इदानीम् (for त्वि°) Ñ2 V1 B1.3.4 D5.7 तमह निहत्य श्रुत्वा(B2 दृष्ट्वा) —c) Ñ2 V B1.3.4 D5.7 [अ]धि (V B1 [अ]धि)गच्छेय, Dt1 [उ]पलप्स्यामि (for [उ]पलप्स्यामि) —d) D4 लाभ (for धन) D6 [ए]व (for [इ]व) —After 24, Ś1 D1-3 ins

1039* मया हतस्य समरे चीरवल्कलवाससः ।
पत्न्याङ्गा भक्षयिष्यन्ति तस्याङ्गानि दुरात्मन ।

[ (1 2) D1 पत्नुषा, D3 पक्षा (for पत्न्याङ्गा) ]

25 ab) V2 illeg from स्तु up to सर्वरे in 26b B3.4 च (for तु) N2 V1 B1.3.4 D5.7 G1 भवद्भिस्तु वसद्भि (by transp) Ñ2 V1 B1.3.4 D5.7 राक्षसाश्रया(V1 B1 °याद्) D1 राममाश्रिता, T2 काममाश्रित (for राममाश्रिता) —c) Ś1 D2 अधिगतव्या (for उपने°) D7 प्रवृत्तिमुपलप्स्यामि —d) B4 D5.7 करोषि(D7 °*) (for करोति) D1.3 राघव (for तत्त्वत)

26 V2 illeg up to सर्वरे in a (cf v.l 25) —a) Ś1 B1.4 अप्रमादाद्व(Ś1 °द्धैश्च) कर्तव्य(B1 °व्य) Ñ2 V1 B1 D1-4.6.7 T2 अप्रमादश्च(D3 °स्तु) कर्तव्य —b) K(ed.) अपि (for एव) —c) D6 तु (for च) Ś1 D1-3 भवेद्यत्नो, M2 सदा यत्नो (for सदा यत्नो) —d) D3 रण (for वध)

27 a) V1 B1 अस्माक (for युष्माकं) N2 Dm1 D1.2 T1 G1 Cg च, B1 Dg1 Dt1 D4 T2.3 M3 तु (for हि) Ñ2 V B1.3.4 Dt1 D4-7 T1 बल ज्ञात्वा(V Dt1 D6 T2 °a) (for बलज्ञोऽह) —b) V3 illeg from रण up to 28b N2 V1 B1.3.4 D5.7 रणकर्मणि —c) Ś1 अतोऽपि वै, D1 °ज्ञास्या D2 अतो यूयं D3 एतदर्थं, M3(after corr sup lin sec m as in text) °ज्ञास्मि (for मतश्चास्मिन्) T1 नूनं (for यूयं) —d) Dg1 Dt1 Dm1 D4.6.8 T2 G M(M1 after corr sup lin sec m as in text) वि(Dg1 T1 प्र)वेशिता (for नियोजिता) Ś1 D1.3 मया वै विनियोजिता (Ś1 °ताः D3 °वेशिता) —For 27cd Ñ2 V1 B1.3.4 D5.7 subst

1040* अतश्च विनियोगेऽस्मिन्भवन्तो विनियोजिता ।

[ Ñ2 D5.7 अत्र, V1 सुतश् (sic) (for अतश्) V2 विनि-योगका ]

—Then all the above MSS cont

1041* सप्रयाते महद्वीर्यं भवता सुदुरासदम् ।

[ V1 महावीर्यं (for महद्वीर्यं) ]

28 V3 illeg for 28ab (cf v.l 27) —a) M1 मत Ś1 Ñ2 V2 B1.3.4 D1-3.5.7 अवेक्ष्य(Ś1 D2 °क्ष), G3 उपैत्य (for उपेत्य) —b) N1 B1.3.4 D5.7 यथाधम्, T1 सुहृत्वम् (for महाधम्) Dm1 D1.8 अभिवाद्य G2(sup lin also) उपलभ्य (for अभिवाद्य) Ś1 D2 महाबलं प्रतिपद्य रावणात्(D3 °णिपत्य रावण) V2 यथानुमानाद्भिवाद्य रावणं G3 महाथमर्षी नृपतिं प्रणम्य त

☞ Ñ1 resumes from विहाय in 28c (cf v.l 1) —c) Ś1 D2 सहसा (for सहिता) —d) B2 D1.2 भयस्य (for अलक्ष्य) D1.3 सत्वरा (for दर्शना)

29 a) Ñ1 D5.7 च, V1 om V2 B1.3.4 (marg) स (for तु) D1 transp ततस्तु and सीताम् Ś1 D1.3 प्रविलभ्य, N2 D5.7 अभिरक्ष्य (for उपलभ्य) Dm1 D3 G2 मैथिलीं (for रावण) —b) G2 M3 स संहृष्ट (for

# ५३

संदिश्य राक्षसान्घोरान्रावणोऽष्टौ महाबलान् ।
आत्मानं बुद्धिवैक्लव्यात्कृतकृत्यममन्यत ॥ १
स चिन्तयानो वैदेहीं कामबाणसमर्पितः ।
प्रविवेश गृहं रम्यं सीतां द्रष्टुमभित्वरन् ॥ २
स प्रविश्य तु तद्वेश्म रावणो राक्षसाधिपः ।
अपश्यद्राक्षसीमध्ये सीतां शोकपरायणाम् ॥ ३
अश्रुपूर्णमुखीं दीनां शोकभारावपीडिताम् ।
वायुवेगैरिवाक्रान्तां मज्जन्तीं नावमर्णवे ॥ ४
मृगयूथपरिभ्रष्टां मृगीं श्वभिरिवावृताम् ।
अधोमुखमुखीं दीनामभ्येत्य च निशाचरः ॥ ५ G 3.61 10 B 3 55 5 L 3 61 6

---

सुस°) Ś1 प्रविलभ्य, Dm1 D4 8 T1 G1 प्रति°, T2 स तु गृह्य, G3 मुनि° M3 स नि° (for परिगृह्य) Dm1 D1 G3 रावण (for मैथिलीम्) Ñ1 पुरा प्रहृष्टश्च निगृह्य मैथिलीं, Ñ2 V B1 4 D5 7 विसृज्य षाष्टौ रजनीचरास्तदा —°) Ś1 N B1 2 4 D1-4 प्रसह्य (for सुसंख्य) —d) G3 तु, M3 च (for स) Dt1 D4 T2 G2 M3 रावण (for राक्षस) Ś1 Ñ2 V B1 4 D1 5 6 7 मु(V स)दान्वि(B4 °मु)तो राक्षसराड्बभूव ह

ॐ Cv  प्रसह्य प्रतिगृह्य मैथिलीमिति पाठ । मुदित स राक्षस इति च पाठ  ॐ

Colophon —*Sarga name* Ś1 D1 सीताप्रमाथ, Ñ1 D1 2 लङ्काप्रवेश  Ñ2 V B1 2 4 D5 7 सीता(B4 °राघा) लङ्काप्रवेश —*Sarga no* (figures words or both) Ś1 Ñ1 B1 2 D1 om  Ñ2 D5 7 60  V1 59  V2 63  B4 D1 61  Dg1 Dt1 Dm1 D4 8 T G M1 2 54  D1 4 57  M3 55 —After colophon, G1 2 concludes with श्रीरामाय नम

## 53

Before Sarga 53 V1 ins App I (No 12) V1 illeg from Sarga 53 up to 3 57 19  D5 begins with ॐ, M1 with श्रीरामाय नम

1 a) Ñ1 आदिश्य (for संदि°) Ñ2 V1 B1 3 4 D5 7 राक्षसास्तु समादिश्य —b) M1 राक्षसो (for रावणो) Dg1 महामना, D1 G1 °यश (for °बलान्) —c) Ś1 N1 D1 2 आत्मनो(D2 °ना) Ś1 Ñ V1 B1 3 4 D1 5 6 7 G3 दौर्बल्यात् (for -वैक्लव्यात्) —d) Ś1 D1-4 कृत(D2 °त) कार्यम् (for कृतकृत्यम्)

2 a) Dt1 T2 G1 M3 स (for स) —b) Dt1 D4 G1 M1 कामबाणै  Ś1 N1 D1 2 बलार्दित, Ñ1(marg) B1 3 4 Dg1 D5 7 -सम(D6 °मा)र्दित, V1 मदर्पित, Dt1 Dm1 D4 6 G3 [अ]व(Dt1 D6 प्र)पीडित  T2 3 समन्वित (for समर्पित) —c) Ś1 D1-4 प्रवेशयद् N1 in marg (for प्रविवेश) —Ś1 D1-3 om (hapl) 2d-3a —d) Ñ1 स सत्वर, N2 V1 B1 4 D5 7 अभि(D5 °पि)त्वरन्, G1 द्रष्टुमत्वरत्

3 Ś1 D2 4 om 3abc (cf v l 2) Ñ1 M2 om 3ab —a) N2 B1 D5 7 च (for तु) T2 M1 सम्प्रविश्य तु, G2 स तु प्रविश्य (by transp) —b) Dm1 D6 8 G राक्षसेश्वर —c) Ñ1 सोपश्यद् —d) V1 Dt1 D6 दु ख (for शोक) —After 3, Ñ2 B1 3 4 D5 7 read 6ab

4 V1 om 4-5  Ñ2 B1 2 4 D5 7 G(ed) om 4ab —a) M3 आपूर्णाश्रु (for अश्रुपूर्ण) D1 मुखा (for मुखीं) —b) Ñ1 निपीडिता, D1 T1 Cg [अ]भिपी°, M3 [अ]तिपी° (for [अ]वपी°) Ś1 D4 मलिनामपि शोभितां —B1 reads 4c-5(including 1046*) in marg —c) B1 2 4 वारिपूरैर(B1 °र्णैर्) Dt1 वायुदवैर (for वायुवेगैर्) B1 [आ]क्रान्ता —d) B1 2 4 मज्जन्ती(B1 °ती) नौवद्(B1 °रिवा) नावे, D1 दवाग्निव वनस्पते —For 4cd, Ñ1 subst

1042* उत्पातमारुताविद्धां सद्या नावमिवार्णवे ।,

while Ñ2 D5 7 subst

1043* वारिधाराभिराक्रान्ता मज्जन्तीं शोकसागरे ।

—After 4 D6 ins राम

5 V1 om 5 (cf v l 4) B1 reads 5 (including 1046*) in marg (cf v l 4) —a) D6 मृगयूथादिव भ्रष्टा —G(ed) om 5cd —c) Dm1(before corr as in text) D6 Ct °गत (for °मुख) Ñ2 B1 4 Dt1 D5 7 गता (for मुखीं) Dg1 Dt1 D4 6 T G2 (before corr as in text) M2 3 सीताम् (for दीनाम्) Ś1 D1-3 अधोमुखीं तु ता दीनाम्(D3 दामलसाम्) —After 5a Ś1 D2 ins.

1044* मलिनामपि शोभिताम् ।
चन्द्रलेखामिवाम्भोदैराच्छन्नामम्बरे निशि ।
सद्यो वनात्पानीतां प्रस्ता वहसरीमिव ।
सद्या दिदृक्ष धीश्च दीम्

[ (l 3) D2 वत्मवनीमिव ]

—d) Ś1 N2 B1 2 4 D1-4 7 G2 M2 3 स (for च) Dt1 Dm1 D6 8 तामभ्येत्य, D5 उपेत्य स (for अभ्येत्य च) —For 5cd N1 subst

1045* अधोमुखीं निरानन्दां राघवे गतचेतसाम् ।

—After 5 N2 B1(m) 3 4 D5 7 ins

1046* अनुशोकवशां दीनां रावणो राक्षसाधिप ।

[ B1 2 वशां दीनां B4 परिक्षीणां (for -वशां दीनां) ]

